ब्राह्मणान् भ्रान्तिवशतः केवलं सुतपसं विना ॥
प्रासादाज्ञानद्विजान् यातो दृष्ट्वा सुतपसः प्रिया ।
धवं तिरस्कृतवती यथैतच्छृणु कालिके ! ॥
हे स्वामिंस्त्वां नृपो मूर्खं मत्वा नाहूतवान् मखे ।
केवलं तव पाण्डित्यं मत्समीपे न शोभते ॥

सुतपा उवाच ।

कान्ते ! ब्रवीमि विप्राणां यत् कर्त्तव्यं शृणुष्व तत् ।
याज्ञामात्रं वचश्चैव काङ्क्षितव्यं न चाधिकम् ॥
विद्वांश्चेद्विद्या दातव्या क्वापि नानार्ज्जवं चरेत् ।
मूर्खश्चेत् केवला सन्ध्या सदोपास्या प्रयत्नतः ॥
प्रिये तेन च वक्तव्यमृतमेवाप्रियन्त्वपि ।
विप्रेण सततं कार्य्यं वैद्यमागमिकञ्च तत् ॥
ऋतौ गच्छेच्च स्वां कान्तां मुदा कालञ्च पातयेत् ।
कालीं कालादिकं वापि जपेद्विप्रो निरन्तरम् ॥
सत्यं स्वभावतो नृणां न्यायादीनां श्रितं वचः ।
वक्तव्यं चेन्न शक्नोति विप्रहानिर्न तत्क्षतिः ॥

ब्राह्मण्युवाच ।

सुमानुषत्वं ते कान्त ! सुविप्रत्वं धव ! त्वयि ।
तिष्ठत्वेव चिरं विप्र तेऽन्ते मे मरणं शिवम् ।
कांस्यकङ्कणवत्यौ भक्तितो मे मृतावधि ॥

सुतपा उवाच ।

प्रिये ते साधुना तीर्थं धनान्तःकरणं सदा ।
विना निमन्त्रितेनापि गत्वा चानीयते धनम् ॥
इत्युक्त्वा सुतपाः कान्तां गत्वा राजसभां प्रिये ! ।
राजानं सुयज्ञं वरणं प्रोवाच नृपतिं द्विजः ॥
रे सुयज्ञ ! विनाह्वानैरगच्छं ते सभामहम् ।
विप्राणां वरणं राजन् ! क्षत्रियाणां तथैव च ॥
कृतं तदपि नाहं रे त्वया दृष्टः स्वचक्षुषा ।
भ्रष्टो भवतु ते यज्ञः कोषं यातु रसातलम् ।
क्रुद्धैतदुक्त्वा सुतपास्ततो नृपसदः स्वकात् ।
विप्रो निःसृतवान् राजा भीतेन मनसाब्रवीत् ॥
हे पुरोहित ! हे विप्र ! हेऽङ्गिरोऽसौ गतः स कः ।
रे इत्युक्त्वा सभामध्ये वृत्तान्तं वद विस्तरात् ॥
नृपाज्ञया क्षत्रियार्थं पट्टादिवस्त्रसंकुलम् ।
स्वर्णाङ्गुरीयकमपि चानेतुं गतवान् हि यः ।
कोषमन्दिरमालोक्य राजान्तिकमथागतः ॥
इत्यब्रवीच्च राजानं चित्रन्ते कोषमन्दिरे ।
किञ्चिच्च वस्तु दृष्टं न भक्ष्यभक्ष्यादिकम् ॥
श्रुत्वैतत् विस्मितो राजाऽब्रवीच्चैतत् पुरोहितम् ।
हे पुरोहित ! विप्र ! त्वं ज्ञातवान् यच्चभूच्च तत् ॥
कोऽपराधोऽस्ति मे विप्रः कथं शप्त्वा गतः प्रभो ! ।
कोषमन्दिरसंपातसंवादं दत्तवानयम् ॥
कोषे नास्ति धनं किञ्चित् सर्वं भक्ष्यभक्ष्यादिकम् ।
श्रुत्वैतदङ्गिरा ब्रूते सुतपा यत्र तत्पट ॥
ततो दुर्गं स राजा च तृणं स्वर्णकुठारकम् ।
गले बद्ध्वा द्विजकुलैर्गतवान् सुतपोऽन्तिकम् ॥
अङ्गिरादिद्विजाः सर्वे तथाद्य सुतपोद्विजम् ।
स्तुतिचक्रुः स राजा च दूरस्थो भक्तितोऽस्तवीत् ॥

अङ्गिरःप्रभृतय ऊचुः ।

धरामरवर ! प्राज्ञ ! नो वरस्त्वं धरातले ।
राज्ञः शिवं नो मानं त्वद्याचामह उमेशहृत् ! ॥
देवस्त्वं देवताश्च त्वं पण्डितानाञ्च पण्डितः ।
दयालो ! नो दयस्व च ! नमस्ते वरतो वर ! ॥
ब्रह्म ब्रह्मा त्वमेव त्वं ब्राह्मणेश्वर मानद ! ।
राज्ञः शिवं नो मानं त्वद्याचामह उमेशहृत्" ! ॥

सुयज्ञराज उवाच ।

हे नाथ ! हे धरेशेश ! धर्म्मकर्म्मविधायक ! ।
सर्वेश्वर ! नमस्तुभ्यं वन्दे ते चरणाम्बुजम् ॥
हे ब्रह्मण्यदेव ! हे नाथ हे धरामर हे प्रभो ! ।
क्षमां कुरु नमस्तुभ्यं प्रणमामि पदं तव ।
नाहं जानामि ते पूजां नाहं जानामि ते स्तुतिम् ॥
नाहं जानामि ते ध्यानं मूढं मां क्षमया रक्ष ॥

सुतपा उवाच ।

किमर्थं स्तुथ हे विप्राः किमर्थं स्तौषि हे नृप ! ।
गच्छ तात मखं गत्वा सुखेन सफलं कुरु ॥
श्रुत्वेति सुतपोवाक्यं सुयज्ञः सुखमानसः ।
कृताञ्जलिपुटो राजा चाब्रवीदिदमुत्तमम् ॥

राजोवाच ।

निमन्त्रयन्तु विप्रेन्द्र ! भोज्यञ्च सकलोत्तमम् ।
एतापराधमात्रस्त्वं क्षमस्व मे क्षमां कुरु ॥
अपराधसहस्राणि कृतवानहमव्यय ! ।
एक महामतीं सुधामयतां मां क्षमां कुरु ॥
मत्सभायां द्विजा ह्येते प्रोचुः पाण्डित्यमद्भुतम् ।
गुणांश्च ते बहुविधान् श्रुत्वाहं सुखमानसः ॥
क्षमस्व नाथ ! मे दोषमेकं प्रश्नोत्तरं वद ।
मत्सभायां बुधः कोऽपि न ब्रवीति विदाम्वर ! ॥
आगच्छति कलिर्घोरस्तत्र के भक्तितो द्विजान् ।
अर्चयिष्यन्तीति श्रुत्वा मे वरञ्च मरणं शिवम् ॥
श्रुत्वैतत् सुतपा विप्रोऽब्रवीच्च सदयो नृपम् ॥

सुतपा उवाच ।

हे सयज्ञ नृपश्रेष्ठ ! ब्राह्मणातिप्रियो नृपः ।
पश्यैतान् विप्रभृत्यांस्त्वमासनादिभिरीहितान् ॥
एतद्घोरकलावेते भविष्यन्ति द्विजार्च्चकाः ।
जाता मसीशाः कायस्था ब्राह्मणेश्वरमानसाः ॥

---

तथाचोक्ता सुरापेया याजपेया द्विजातिभिः ॥
वैष्णवं धर्ममाश्रित्य महाक्यं प्रतिपालय ।
कर्त्तव्यं हि प्रयत्नेन लोकदृष्टहिताय वै ॥
एवमित्थं सुतानेवं चित्रगुप्तो दिवं ययौ ।
धर्मराजस्याधिकारी चित्रगुप्तो बभूव च ॥
अथ भीष्म ! मनुष्याः कायस्था ये प्रकीर्तिताः ।
ते प्रष्टास्ते मया ख्याताः संवादं शृणु सत्वरः ॥
अहं ते कथयिष्यामि विचित्रं परमाद्भुतम् ।
प्रभावं चित्रगुप्तस्य समुद्भूतं यथा पुरः" ॥

पुलस्त्य उवाच ।

"सौदासो नाम राजाभूत् नगरे जितिसपत्नके ।
महा पापरतः सोऽथ धर्माधर्मं न विन्दति ॥
स यथा स्वर्गमासाद्य लेभे पुण्यफलं शृणु ।
सर्व्वपापी दुराचारः सर्वधर्मविवर्जितः ॥
राजनीतिगतं धर्मं न जानाति कथञ्चन ।
चानित्यजयकर्माणि तत्राप्यधममश्नुते ॥
न कर्त्तव्यं द्विजैः क्वापि मयाज्ञप्तैर्मदीयकैः ।
एवमाज्ञप्तवांश्चाके देवपित्र्यकर्मणि ॥
परित्यज्य स्वकं देशं सर्वा देशान्तरं ययौ ।
ये केचिद्वसतिं चक्रुर्लोकाः ब्राह्मणादिषु ॥
ततः प्रभृति गाङ्गेय ! न यज्ञश्चरणं क्वचित्" ॥
"न कोऽपि कुरुते भीष्म ! पुण्यं तत्र नियोजितम् ।
एतेन ब्राह्मणादिभ्यः करं धर्मविदूषकः ॥
चरां धर्मस्थता अस्य शृणु कर्म विपाकजम् ॥
कालेनाल्पेन गाङ्गेय सौदासो विचरन् महीम् ।
कार्त्तिके शुक्लपक्षे च द्वितीया शोभना तिथिः ।
तस्यां कायस्थ कायस्थैश्चित्रगुप्तस्य पूजनम् ॥
मद्गतीभक्तिभावेन धूपदीपादिभिस्तथा ॥
देवयागात्समायातः सौदासः पर्यटन्महीम् ।
सहायुक्तपरीतेन दृष्ट्वा च पूजनं ततः ।
कृत्वा सुपूजनं तत्र चित्रगुप्तस्य भक्तितः ॥
गतपापोऽभवत् सद्यः सौदासोऽसौ महीपतिः ।
चित्रगुप्तप्रभावेण गतो लोकं सुरालयम् ॥
इदं विचित्रमाख्यातं चित्रगुप्तप्रभावजम् ।
कथितं नरशार्दूल ! किमन्यत् श्रोतुमिच्छसि ॥
इत्याकर्ण्य ततो भीष्मः प्रत्युवाच मुनिं ततः ।
विधिना केन तत्रापि पूजा कार्या महामुने ! ॥
के मन्त्राः को विधिस्तत्र सर्वं तद्वद मे प्रभो ।
यामासाद्य मुनिश्रेष्ठ ! सौदासः स्वर्गमाप्तवान् ॥

पुलस्त्य उवाच ।

चित्रगुप्तस्य पूजाया विधानं कथयाम्यहम् ।
नैवेद्यैर्घृतपक्वैश्च यथाकालोद्भवैः फलैः ॥
गन्धपुष्पोपहारैश्च धूपदीपैः समाहितः ।
चित्रगुप्तञ्च संपूज्य श्रद्धाभक्तिसमन्वितः ॥
नवकुम्भं समानीय पानीयपरिपूरितम् ।
शर्करापूरितं कृत्वा पात्रं तस्योपरि न्यसेत् ॥
पूजान्ते च प्रयत्नेन दातव्यञ्च द्विजन्मने ।
ब्राह्मणान् भोजयेत्तत्र कायस्थानपि मन्त्रवित् ॥
मसीभाजनसंयुक्तः सदा चरसि भूतले ।
लेखनीच्छेदनीहस्तश्चित्रगुप्त ! नमोऽस्तु ते ॥
चित्रगुप्त नमस्तुभ्यं नमस्ते धर्मरूपिणे ।
तेषां त्वं पालको नित्यं ततः शान्तिं प्रयच्छ मे ॥
अनेनैव विधानेन राजेन्द्र चित्रगुप्तस्य पूजनम् ।
एवं संपूज्य विधिवत् सौदासो भक्तिभावतः ॥
अचिरात् पापनिर्मुक्तो राज्यं कृत्वा मृतो नृपः ।
नीतोऽसौ यमदूतैश्च यमलोकं भयानकम् ॥
चित्रगुप्तप्रसादाच्छक्रधर्मराजोऽपि भारत ! ॥

धर्मराज उवाच ।

सौदासोऽसौ दुराचारः पापकर्मसदारतः ।
यानि कानि च पापानि राजासौ कृतवान् भुवि ॥
दृष्टोऽसौ यमराजेन धर्माधर्मविशारदः ।
धर्मराजं ततः प्राह चित्रगुप्तो महामतिः ॥
विपाकं धर्मजं ज्ञात्वा तं प्रत्याब्रवीद्वचः ॥

चित्रगुप्त उवाच ।

जानेऽहं पापकर्मासौ राजायं विदितः सदा ।
तत्प्रसादादहं वीर ! पूज्योऽस्मि वसुधातले ॥
मया दत्तं वरं स्वामिन् भक्तोऽयं सदा प्रियः ।
इति ज्ञात्वा महाराज राजापापोऽस्ति मे मतिः ॥
पूजां चकार राजासौ दृष्ट्वा पूजाञ्च मामकीम् ।
अतस्तुष्टोऽस्मि हे देव ! यातु विष्णुपदं नृपः ॥
धर्मेणाज्ञापितो राजा वैष्णवं पदमाप्तवान् ।
ये चान्ये पूजयिष्यन्ति चित्रगुप्तं महीतले ॥
कायस्थाः पापनिर्मुक्ता यास्यन्ति परमां गतिम् ।
तस्मात् त्वमपि गाङ्गेय ! पूजां कुरु विधानतः ॥

दालभ्य उवाच ।

मुनेर्वचनमाकर्ण्य भीष्मः प्रयतमानसः ।
चकार पूजनं तत्र चित्रगुप्तस्य तत्परः ॥
कार्त्तिके शुक्लपक्षे तु द्वितीयायाञ्च भारत ! ।
यमञ्च चित्रगुप्तञ्च यमदूतांश्च पूजयेत् ॥
अतो यमद्वितीयेति संज्ञा लोके बभूव च ।
तेनैव भगिनीहस्ते भोजनं पुष्टिवर्द्धनम् ॥

चित्राङ्गद उवाच ।
"हे ब्राह्मणा हे गुरवो ! मामेवातिनिरागसम् ।
कथं शीघ्रमभवन्तो हि विप्ररूपा च ईश्वराः ॥
मुखाद्वो श्रुतवान् यद्यत्स्तुतिः का तत्समाचरन् ।
उपास्यो यस्तद्भवितुं सर्व्वं ह्युद्योगिनः स्थिर ॥
जानेऽहं ब्राह्मणो ब्रह्म स्वेच्छया विविधाकृतिः ।
नानालीलामाचरितुं मानुषाकृतिरप्यभूत् ॥
तद्ब्रह्म ब्राह्मणं जाने जाने तत् सर्व्वरूपधृक् ।
राजेति संज्ञाधारी कः किं वा तच्च प्रजाभिधम् ॥
तदेव सकलस्यापि तदेव सर्व्वकर्तृ च ।
तदेव सर्व्वपाल स्यात्तदेव सर्व्वहर्तृ च ॥
पुंरूपं चैव स्त्रीरूपं क्लीवरूपञ्च नान्यथा ।
आत्मा एवैकरूपं तत् स्वमेवानेकमाकरोत् ॥
नानाप्रकारजीवादि चात्मनात्मानमेव हि ।
स्थावरं जङ्गमं विप्रास्तदेव नात्र संशयः ॥
भवन्तो ह्रीश्वराः सर्व्वे किमर्थंयथ तत् कथम् ।
कथं चिन्तयथात्मानं देवमर्थमकाजतः ॥
छलेन भूलस्पृश्यादि कृत्वा देवाः स्युरेव किम् ।
ईशोऽपि मानुषाकृत्या ईशत्वप्राप्तये पुनः ॥
यद्युद्योगी भवेत्तत् किं मानुषोऽहं न तत्परे ।
अन्यापि न भवेद्ब्रह्म यूयमन्यायिनः कथम् ॥
वगलापि च या जप्या सा च ब्राह्मण एव हि ।
कश्चिद्विशेषो भेदोऽपि वगलायां द्विजेऽपि न ॥
अतस्तद्भवितुं विप्रा अहमप्येव तापसः ।
गुर्व्वाज्ञा मे पुराभूच्च सर्व्वं त्यक्त्वा जपं कुरु ॥
अतोऽहं सकलं त्यक्त्वा केवलां वगलां जपे ।
वगलायां द्विजे नैव कश्चिद्भेदोऽस्ति शासने ॥
अतो विप्रोऽस्मीति कामं कृतवान् जपकर्म्मणि ।
गुरौ विप्रे मनौ चापि देवे चात्मनि भूसुराः ॥
मसीशजातिः किञ्चिच्च न विशेषं विचिन्तयेत् ।
ब्राह्मणोऽप्यविशेषश्च तस्मिंस्तस्मिंश्च भूसुराः ॥
आत्मन्यात्मनि कीटेऽपि चेति वो जातिलक्षणम् ।
मूर्खोऽहं यच्च श्रुतवान् प्रभवो ब्राह्मणास्यतः ॥
सदाचरितवान् मे को दोषोऽस्ति वदत द्विजाः ।
विनापराधतो विप्रा यूयं वामनरूपतः ॥
बलिच्छातिप्रियं भक्तमधः प्रस्थापयन् यदि ।
अहं कीटोऽत्र माहात्म्यं किमधो न पटे कथम् ॥
छलाञ्जलिपुटोऽहं वत्सरणां शतसंख्यया ।
प्रणमे सादरं विप्रा गच्छताहमधः पटे ॥
अधोगच्छाम्यहं तत्र किञ्चित् खेदं करोमि न ।
वाञ्छयामीति चाज्ञा वो न लङ्घ्या भवतु क्वचित् ॥
इत्यादि श्रुत्वा हे कालि! लज्जां प्राप्यातिखेदिताः ।
श्रुवन्ति चातिमधुरं क्रन्दन्त इव ते द्विजाः ॥
हे चित्राङ्गद ! हे विद्वन् ! दौर्म्मनस्यं त्यज वत्सक ! ।
दुश्चिन्तां कुरु मा तात भद्रं ते कथयामि ते ॥
जनस्तपोबलेनैव सर्व्वं भवितुमर्हति ।
मार्हतीशं विना तात ब्राह्मणो भवितुं किल ॥
इतीश्वराज्ञा वेदेऽस्ति प्रतिजानीहि तत्त्वतः ।
वरं प्राप्नोति देवत्वं ब्राह्मणत्वं कदापि न ॥
यथामरत्वमीशेन विना क्वापि न शासने ।
मा दुःखी त्वमधो गच्छ सुखेन वगलां जप ॥
कलेदशसहस्राणि नागलोकेश्वरो भव ।

ततश्चिन्नलोकनाथत्वमिन्द्रतुल्यो भविष्यसि ॥
राज्यं भुक्त्वा ततो नैव पुनरावर्त्तनं तव ।
सदा वयं तव शिवं चिन्तयामो न भीं कुरु ॥
के जानन्तीदृशं त्वां हि भक्तश्रेष्ठं विवेचकम् ।
प्रायं दारुणमाञ्जस्यमधुना तन्न खण्डति ॥
तात गच्छ सुखं भुङ्क्ष्व नागलोकेऽपि विस्तरात् ।
तत आनन्दमनसा गतश्चित्राङ्गदस्तलम् ॥
स्वस्थानं ब्राह्मणाश्चापि चागच्छन् लज्जितान्तराः ।
भूस्यो मसीशः सर्व्वोऽपि विप्रदासाभिधोऽभवत् ॥
विप्रप्रसादात् शूद्राणामपि श्रेष्ठो बभूव च ।
वगलेति महामन्त्रं सर्व्वेषां सर्व्वकामदम् ॥
केवलेन जपेनैव लक्षेण कालि ! सिध्यति ।
वशीकरणकर्म्मादि दशसाहस्रतो भवेत् ॥
अथ वक्ष्ये महेशानि ! वगलासाधनं तव ।
वगलेति मनोः संख्या पुरश्चरणकर्म्मणि ॥
लक्षेण मन्त्रसिद्धिः स्यात् नान्यत्र युगसंख्यकम् ।
ततो वश्यादि कर्त्तव्यं दशसाहस्रसंख्यया ॥
शरीरारोग्यतो वापि धनेच्छुस्त्वयुतं जपेत् ।
कलावेतस्य हि मनोः प्रभावं किं ब्रवीमि ते ॥
सहस्रमात्रहोमेन सर्व्वसिद्धिर्न चान्यथा ।
नास्त्यपेक्षा हि ऋष्यादेः स्तुतिपाठादिकस्य वा ॥
स्तुतिर्व्वा कवचं वापि ऋष्यादिन्यास एव वा ।
वगलेति स्वयं सर्व्वं सिद्धविद्या इति प्रिये ! ॥
लयाद्याल्पया कालि ! स्वयमुक्तं पुरैकदा ।
शरीरारोग्यतो देवि ! वैरिनिग्रहतोऽपि वा ॥
दिवा नक्तञ्च कर्त्तव्या सहस्रमानतो ऽहुतिः ।
केवलाहुतिमात्रेण नानावारोग्यतां लभेत् ॥
वगले इति यो द्विसाप्यक्षोचैर्यंत्र वारयेत् ।
पथिस्था विघ्नदाः सर्व्वे पलायन्ते तमीक्षिताः ॥
भवेद्धि सफलं कर्म्म वगलेति स्मरन् जनः ।
वगलाजापिनं दृष्ट्वा सर्व्वे भीतिमवाप्नुयुः ॥
केवलं पटलमिदं पठन् प्रार्थयन् मनोरथम् ।
लभेत् कालि ! वपुस्त्यक्त्वा वगलाख्ये न संशयः ॥
एषा विद्या मसीशेन सदोपास्या न संशयः ।
ब्राह्मणे वगलायाञ्च चिन्तयेदेकरूपतः ॥
विना प्रयुक्तिमपि च मसीशं श्रावयेद्द्विजः ।
श्रावणायां धनाकाङ्क्षी न भवेद्ब्राह्मणोत्तमः ॥
आलस्याद्वा प्रमादाद्वा श्रावयेन्न यदि द्विजः ।
मसीशहत्याभागी स्यात्छ्रावयित्वा तव प्रियः ॥
ब्राह्मणोऽपि वरारोहे ! प्रणयात् भक्तितत्परः ।
निर्व्वाणं लभते कालि ! निष्कामो कोऽपि चेत् पठेत् ।
एतद्युक्तोऽपि कायस्थः प्रणयाद्यदि प्रिये ! ।
पटलं काम्यदस्त्वाशु ब्रह्महत्याफलं लभेत्" ॥
इति आचारनिर्णयतन्त्रे वासुदेवसम्मते हर-
पार्व्वतीसंवादे सप्तविंशतितमः पटलः ॥
"चाटचारगचौरेभ्यो वधबन्धभयादिभिः ।
पीड्यमानाः प्रजा रक्षेत् कायस्थेभ्यो विशेषतः" ॥
इति वह्निपुराणे पाशुपतदानाध्यायः ॥ * ॥

गौड़देशे तेषामागमनकारणम् । तत्रादौ मङ्गलाचरणं यथा,—

"यस्याभूद्भूमिदेवो वदनसरसिजेद्दभुजेभूमिपालो यस्योर्व्वोर्वैश्य एव द्विजभजनरतिरंघ्रि शूद्रःपदाब्जे ।
यस्य प्रातिश्यतीदं जगदिति प्रकृतिर्यः स्वयं पूरुषस्तं वन्देऽहं देवदेवं त्रिगुणमयवरं सर्व्वलोकानुकम्पम्" ॥

अथ आदिशूरराजप्रशंसा ।

"श्रीमद्राजादिशूरोऽभवदवनिपतिर्धर्म्मराजो नु साक्षात् सश्लोकः सद्विचारैरदितिसुतपतिः स्वर्गधात्रीदृतचासीत् । प्रतापादित्यसप्राखिलतिमिररिपुस्त्वयवेशा महात्मा जित्वा बुद्धांश्चकार स्वयमपि नृपतिर्गौड़राज्याभिरक्षाम्" ॥ * ॥ अथादिशूरस्य पार्श्वं प्रति ऋतुकामाद्यकुलीनशूद्रयोः प्रश्नस्योत्तरञ्च ।"पार्श्वं प्रपन्न भूतं परमसुरपदद्वन्द्वपद्मार्चकोऽसौ काश्यपे काश्यपीयाः ऋतुकृतिकुशलाः क्वापि शूद्राः कुलीनाः । पाश्चात्येषा मवोचत् परिचयमखिलं भूपवाक्यात् द्विजास्ते कोलाञ्चल्याः कुरङ्गा इव किल तपसा नैव केषामधीनाः ॥ कोलाञ्चस्य महीपतिः क्षितिभुजामेकप्रधानः प्रधी लोके निरुमतिर्महाशयवरं श्रीवीरसिंहः स्वभूत् । तद्देशवासिनः समाधिकृतिनः पापाभिसंहारिणः सन्ति ब्राह्मणाः सभासद इतो गौड़ेन्द्रभूमीश्वराः" ॥ * ॥

अथ वीरसिंहं प्रति लिपिप्रेरणम् ।

"भूपोऽभूद्भवने स्वचेष्टितपरः सद्भृत्यभार्य्यान्वितान् भूदेवान् स्वयमान् विचिन्त्य निखिलैरानेतुकामः स्वयम् । पाश्चेषां प्रणयप्रमोदरचितां श्रीवीरसिंहे लिपिं गौड़क्ष्मापतिरेव पुण्यसुमतिर्दूतेन प्रास्थापयत्" ॥ * ॥

अथ लिपिप्रकारः ।

"सुकृतसुकृतसंघाः सर्व्वशास्त्रार्थदक्षा
अपितपतविपक्षाः स्वस्तिवाक्याः श्रुतिज्ञाः ।
सुजितसुगतवन्दे गौड़राज्ये मदीये
द्विजकुलवरजाताः सानुकम्प्याः प्रयान्तु ॥
नृपतिसुकृतिसारः सोमवंशावतारः
प्रबलबलविचारो वीरसिंहोऽतिवीरः ।
मयि वरसखितास्ते भूमिदेवान् ससूद्रान्
पुनरपि मम गौड़े प्रापय त्वं नितान्तम्" ॥ * ॥

अथ ब्राह्मणशूद्राणां गौड़देशे गमनेच्छा ।

"मुदा गन्तुकामाः पुरावासगौड़ाः
समाहाय कोलाञ्चदेशं क्षितीशम् ।
नृपाज्ञाञ्च लब्ध्वा सदारादिभृत्या
महायोगिनस्ते बभूवुः सशूद्राः" ॥ * ॥

अथादिशूरसमीपे ब्राह्मणप्रेरणम् ।

"महाराजराजादिशूरो महात्मा
त्वया वीरसिंहस्य मेऽस्त्वादिसख्यम् ।
तवाज्ञानुसाराद्धि प्रस्थापयामि
द्विजान् पञ्चगोत्रान् सदारादिभृत्यान्" ॥ * ॥

अथ ब्राह्मणानां गमनम् ।

"चलच्चक्षुलाम्बालियानाः प्रधाना
कचत्पन्नगुम्फातिशोभानलाभाः ।
ऋतुज्ञाः श्रुतिज्ञाः प्रतिज्ञानसाध्याः
सवर्म्मास्त्रशस्त्राः प्रयाताः प्रयागम् ॥
ततः स्नानदानादि कृत्वा च विप्राः
यदन्तेऽपि वाराणसीं पञ्चगोत्राः ।
ततो विश्वनाथं समालोक्य दाशेयंशः प्राप्य तस्माद्गयाभूमिमापुः" ॥ * ॥

अथ ब्राह्मणानां गौड़राज्यप्रवेशो राजसमीपे चाशिरर्थं गमनञ्च ।

"पितृन् बान्धवांस्त्याजयित्वा गयायां
गताः शासितं गौड़राज्येश्वराज्यम् ।
ततस्तेजसा ते दिशो भासयन्तः
श्रुतिं व्याहृतिं भारतीं पाठयन्तः ॥
ततो धृतदूर्व्वाक्षताः पञ्चगोत्रा
नृपञ्चाशिषं कर्त्तुमेव प्रसस्रुः ।
अमी पञ्च मध्याह्नमार्त्तण्डतुल्या
द्विजाः क्षायितास्याः परश्चेयसञ्च" ॥ * ॥

अथैषां वेशं दृष्ट्वा राज्ञोऽवज्ञा तेषां शुष्काष्ठे चाशिषो निक्षेपश्च । "दृष्ट्वैवं वेशमेषामवनिपतिरसौ व्यान्तचित्तो द्विजानां तैराज्ञायं न ज्ञात्वा क्षणमपि यदौ गन्तुकामाः पुनस्ते। बुद्ध्वा भूपालबुद्धिं क्षणमपि च बुधाः शुष्ककाष्ठाशिषस्ते तत्कालात् प्राप्य दूर्व्वादलमपि स बभौ शुष्ककाष्ठः सुकाष्ठः" ॥ * ॥ अथ राज्ञा ब्राह्मणानां प्रणामनं गोत्रनामप्रश्नश्च ।

"सविस्मया वै गलबद्धवस्त्रा
भूपादयस्ते चरणारविन्दम् ।
पवित्रकीर्त्तिं भुवि भूसुराणां
श्रुत्वा च पेतुः सकलाः प्रणम्य ॥
क्षमध्वमस्माकमुचितवादं
मूढात्ममाद्यापराधं हि विप्राः ।
भो ब्रूत विप्राः किमु नाम गोत्रं
ततश्च सर्व्वे गदितुं प्रवृत्ताः" ॥ * ॥

अथ पञ्चब्राह्मणानां परिचयः ।

"अभूदन्यवंशोद्भवो भट्टनारायणोऽयञ्च शाण्डिल्यगोत्रे गरीयान् । तपस्वान् यशस्वान् दयावान् सुविद्वान् विवस्वानिवास्यां सभायां विभाति॥ श्रुतिनत्यतदङ्गविचारकरोऽवनिपालक काश्यपगोत्रवरः । भुवि दक्षसम' किल दक्षमहाशयो नाम इति भुवि भाति यतिः ॥ समस्तशास्त्रपण्डितकथागतप्रशंसितः प्रचण्डसर्व्ववैरिदर्पगर्व्वखर्व्वकारकः । सावर्णगोत्रसम्भवोऽत्र भाति वेदगर्भकः छान्दडः प्रभाति भूप वात्स्यगोत्रसम्भवः ॥ यशःसुधाकरोत्पतत्पवित्रकुण्ठयोर्षितानाम्बुजे महातपस्तपोवशीकृतेन्द्रियः ॥ अयं श्रीहर्षोऽभिशं ह्यानहर्षी महर्षिर्यथास्यां तपोभिः प्रभाति । क्षितीन्द्र! क्षितौ यो भरद्वाजगोत्रेश्वरो विप्रवर्य्यः प्रतापारिशौर्य्यः" ॥ * ॥

अथ शूद्रपरिचयप्रश्नः ।

"के यूयं नाम किं वा कथयत कुलिनः स्वागताः कापि देशात् ? कोलाञ्चात् पञ्चशूद्रा वयमपि नृपते ! किङ्करा भूसुराणाम् । धन्या यूयं पृथिव्यां परिचयमखिलं ब्रूत भो विप्रभक्ताः श्रुत्वोद्युक्तिं प्रवर्य्याः सकलपरिचयं भूपतेरन्ति चैषाम् ॥ * ॥

अथ पञ्चशूद्राणां परिचयः ।

"सुकृतालिकृताम्बर एष कृती
क्षितिदेवपदाम्बुजचारुरतिः ।
मकरन्द इति प्रतिभाति यतिर्हिमवन्नुकुलोद्भवभक्तगतिः ॥

स च घोषकुलाम्बुजभानुरयं
प्रथिमेन्दुयशाःसुरलोकवशः ।
सततं सुगुणो सुमतिश्च सुधीः
शरदिन्दुपयोऽम्बुधिकुन्दयशाः ॥
वसुधाधिपचक्रवर्त्तिनो
वसुतुल्या वसुवंशसम्भवाः ।
वसुधाविदिता गुणार्णवैर्नियतं ते जयिनो भवन्तु नः ॥
दशरथो विदितो जगतीतले
दशरथप्रथितः प्रथमः कुले ।
दशदिशां जयिना यशसा जयी
विजयते विभवैः कुलसागरे ॥
यशस्विनां यशोधरः सदा हि सर्व्वसादरः
प्रमत्तमत्तमत्तङ्गशरत्सुधांशुवद्यशः ।
प्रतापतापतोषपङ्क्तिवाजियोविदाशिकी
विभाति मित्रवंशसिन्धुकालिदासचन्द्रकः ॥
द्विजाङ्घ्रिपालनार्थकोऽप्यसौ च हर्षसेवकः ।
कुलाम्बुजप्रकाशको यथान्धकारदीपकः ॥
अयं गुरुकुलोद्भवो दशरथाभिधानो महान्
कुलाम्बुजमधुव्रतो विविधपुण्यपुञ्जान्वितः ।
निशम्य गुरुभाषितं सकलसभ्यहास्यं वभूत्
स वङ्गगमनोद्यतो विविधमानभक्तो यतः ॥
अयञ्च पुरुषोत्तमः कुलभद्रयशगण्यः कृती
सुदत्तकुलसम्भवो निखिलशास्त्रविद्योत्तमः ।
विलोकितुमिहागतो द्विजवरैश्च राज्यं प्रभो!
चकार नृपतिः स तं विनयशीलतो निष्कुलम्" ॥ * ॥

अथाष्टौ सिद्धमौलिकाः ।

"गौडेऽष्टौ कीर्त्तिमन्तश्चिरवसतिकृता मौलिका ये हि सिद्धास्ते दत्ताः सेनदासाः करगुहसहिताः पालिताः सिंहदेवाः । ये वापाद्याभिमुख्याः स्थितिविनयजुषः सम्प्रतिस्ते हि पूर्व्वा च्छौड़ाद्या वीक्ष्य राज्ञा चरणगुणयुता मौलिकत्वेन साध्याः" ॥ * ॥

अथ द्विसप्ततिः साध्यमौलिकाः ।

"छोड़ः खन धर धरणी वान आढ्य सोमः पै सुर सामः । भञ्ज विन्दो गुह वल लोधः शर्म्मा वर्म्मा कुड सुइ चन्द्रः ॥ रुद्रो रक्षित राजादित्यो विष्णुर्नागः खिल पिल गुनः । इन्द्रो गुप्तः पाली भद्र ओमश्चाङ्कुर बन्धुक नाथः ॥ शीह हैमश्च मनो गणको राहा राणा राउत साना दाहा दाना गण उपगाना । श्यामः क्षोमो धर वैश्यो वौ वीदन्तेज-आर्णव आशः ॥ शक्तिर्भूतो भञ्जः शानः क्षेमो हेमो वर्द्धन रङ्गः । गुइः कीर्त्तिर्यशः कुण्डुर्नन्दी शीलो धनुर्गुणः ॥ * ॥ इति दक्षिणराढीयघटककारिका ॥ * ॥ * ॥ * ॥

अथ वङ्गजकुलाचार्य्यकारिका लिख्यते ।

अथ शूद्रोत्पत्तिः ।

तथा चाग्निपुराणोक्तजातिमालायाम् ।

"आदौ प्रजापतेर्जाता मुखाद्विप्राः सदारकाः ।
बाह्वोश्च क्षत्रिया जाता उर्व्वोर्वैश्या विजज्ञिरे ॥
पादाब्जश्च सम्भूतस्त्रिवर्णस्य च सेवकः ।
भीमनामा सुतस्तस्य प्रदीपस्तस्य पुत्रकः ॥
कायस्थस्य पुत्रोऽभूद्बभूव लिपिकारकः ।
कायस्थस्य त्रयः पुत्राः विख्याता जगतीतले ॥
चित्रगुप्तश्चित्रसेनो विचित्रश्च तथैव च ।
चित्रगुप्तो गतः स्वर्गे विचित्रो नागसन्निधौ ॥
चित्रसेनः पृथिव्यां वै इति शूद्रः प्रचक्ष्यते" ॥ * ॥

अथ चित्रसेनादिसुताः ।

"वसुर्घोषो गुहो मित्रो दत्तः करण एव च ।
मृत्युञ्जयश्च सप्तैते चित्रसेनसुता भुवि ॥
करणस्य सुता जाता नागो नाथश्च दासकः ।
मृत्युञ्जयतनूद्भूता देवः सेनश्च पालितः ॥
सिंहश्चैव तथा ख्यातश्चैते पद्धतिकारकाः ।
एते पद्धतिकाराश्च मुनिभिः कथिताः पुरा" ॥ * ॥

अथ द्वादशशूद्रवंशजाः ।

"वसुर्घोषो गुहो मित्रो दत्तो नागश्च नाथकः ।
दासो देवस्तथा सेनः पालितः सिंह एव च ॥
एते द्वादशनामानः प्रसिद्धाः शूद्रवंशजाः" ॥ * ॥

अथ सप्ताशीतिः पद्धतिकाराः ।

"मृत्युञ्जयवंशभूतो नित्यानन्दो नृपेश्वरः ।
तस्यापि वंशसंजाताः सप्ताशीतिः प्रकीर्त्तिताः ॥
तेऽपि पद्धतिकाराश्च मुनिभिः कथिताः पुरा" ॥ * ॥

तेषां नामानि ।

करो भद्रो धरो नन्दी पालश्चाङ्कुरदासकः ।
कारो धरणिचोड़ौ च वानश्चाढ्यसोमकौ ॥
पै सुरः शोनकश्चैव भञ्जो विन्दुर्गुहस्तथा ।
बलश्च लोदकश्चैव शर्म्मा वर्म्मा च भूमिकः ॥
कुण्डश्च रुद्रकश्चैव चन्द्रो रक्षितराजकौ ।
आदित्यविष्णुगुप्ताश्च खिलश्च पीलकस्तथा ॥
चान्निर्हैमश्च बन्धुश्च शाक्तिश्च सुमगुणस्तथा ।
गणकौ राहकश्चैव राणाराउतदाहकाः ॥
दाना गणश्च मागाश्च श्यामापक्षेमधारकाः ।
वैतोषवेदकाश्चैन्दश्चाग्निस्थावशक्तिकाः ॥
भूतो भञ्जः संज्ञः द्रोमो वर्द्धनो हेमरङ्गकौ ।
भूमिः कीर्त्तिर्यशः कुण्डुः शीलश्चैव धनुर्गुणः ॥
दौड़िर्मणिरितिश्चैव चाकिश्च नन्दनस्तथा ।
श्यामश्चाढ्यश्च पूर्णिश्च तेजको नाद एव च ॥
गोड्ढोमश्च हायिश्च ढोलश्च दूतकस्तथा ।
एते पद्धतिकाराश्च सप्ताशीतिः प्रकीर्त्तिताः" ॥

एताः सप्ताशीतिपद्धतयः द्वादशशूद्रपद्धतयश्च मिलिता नवाधिकनवतिपद्धतयो भवन्ति ॥ एतेषां पुरोहितगोत्रप्रवरेण गोत्रप्रवरत्वं मुनिभिरुक्तम् ॥ * ।

अथ कान्यकुब्जात् पञ्चानां विप्राणां शूद्राणाञ्चागमनमाह देवीवरः ।

"अम्बष्ठकुलसम्भूत आदिशूरो नृपेश्वरः ।
राढ़गौड़वरेन्द्राश्च वङ्गदेशस्तथैव च ॥
एतेषां नृपतिश्चैव सर्व्वभूमीश्वरो यथा ।
अमात्यैर्बान्धवैश्चैव मन्त्रिभिर्द्विजनन्दकैः ॥
एतैः सह महीपाल एकदा स निजालये ।
उपविष्टो द्विजान् प्रष्टुं धर्म्मशास्त्रपरायणः ॥
केन यज्ञेन भगवत्प्रीतिर्भवति निश्चितम् ।
तत् सर्व्वं श्रोतुमिच्छामि कथयध्वं द्विजोत्तमाः ॥
इति श्रुत्वा द्विजाः सर्व्वे खर्व्वीकृतकलेवराः ।
कथयन्ति नृपाग्रे तु सर्व्वे विज्ञतमानसाः ॥
केन केन विधानेन यज्ञो वा क्रियते बुधैः ।

वयं सर्व्वे न जानीमो विधानं कीदृशं क्रतोः ॥
इति तेषां वचः श्रुत्वा चिन्तायुक्तो महीपतिः ।
किं करोमि क्व गच्छामि विललाप पुनः पुनः ॥
कान्यकुब्जात् समानीतान् दूतेन द्विजपञ्चकान् ।
वेदशास्त्रेष्ववगतान् सर्व्वशास्त्रे च विशारदान् ॥
गोयानारोहितान् विप्रान् खड्गचर्म्मादिभिर्युतान् ।
पत्तिवेशान् समालोक्य विषादो जायते हृदि ॥
अश्रद्धा जायते राज्ञ इति ज्ञात्वा द्विजोत्तमाः ।
आशीर्व्वादार्थनिर्म्माल्यं मल्लकाष्ठोपरि स्थितम् ॥
तदा काष्ठं सजीवं स्यात् फलपल्लवसंयुतम् ।
इति दृष्ट्वा नृपस्तस्मिन् कम्पान्वितकलेवरः ॥
स्तोत्रञ्च बहुधा तेषामकरोत् स नृपोत्तमः ।
आसनं पाद्यमानीय ददौ विनयपूर्व्वकम् ।
उपविष्टा द्विजाः पञ्च तथा च शूद्रपञ्चकाः ॥
राजंस्ते कुशलं सर्व्वं प्रोचुरित्यवदत् स तान् ।
अद्य मे सफलं जन्म जीवितञ्च सुजीवितम् ॥
पूतञ्च भवनं जातं युष्माकं गमनं यतः ।
एवञ्च क्रियते स्तोत्रं पृष्टान्यत् शूद्रपञ्चके ॥
युष्माकं गोत्रमाख्या च किमर्थं वा द्विजैः सह ।
तत् सर्व्वं श्रोतुमिच्छामि ब्रूत भोः शूद्रपुङ्गवाः ॥
इति राज्ञो वचः श्रुत्वा कथयन् नामगोत्रके ।
काश्यपे चैव गोत्रे च दत्तनामा महामतिः ॥
तस्य दासो गौतमस्य गोत्रे दशरथो वसुः ।
शाण्डिल्यगोत्रे सम्भूतो भट्टनारायणः कृती ॥
सौकालिनश्च दासोऽयं घोषः श्रीमकरन्दकः ।
भरद्वाजेषु विख्यातः श्रीहर्षो मुनिसत्तमः ॥
दासस्तस्य विराटाख्यो गुहकः काश्यपः स्मृतः ।
सावर्णगोत्रनिर्द्दिष्टो वेदगर्भमुनिस्त्वयम् ॥
तस्य दासो मित्रवंश्यो विश्वामित्रश्च गोत्रकः ।
कालिदास इति ख्यातः शूद्रवंशसमुद्भवः ॥
वात्स्यगोत्रेषु सम्भूतश्छान्दडश्चेति संज्ञितः ।
मौद्गल्यगोत्रजो दत्तः पुरुषोत्तमसंज्ञकः ॥
एतेषां रक्षणार्थाय आगतोऽस्मि तवालये ।
इति श्रुत्वा नृपस्तत्र मनसा हर्षमागतः ॥
विधानेनैव निर्व्वर्त्य क्रतुञ्च धर्म्मसंज्ञितम् ।
ग्रामं सुवर्णं गाश्चैव वस्त्राणि विविधानि च ॥
दक्षिणार्थं द्विजातिभ्यः प्रददौ स नृपोत्तमः ।
अत्र देशे कृतावासाः सर्व्वे च द्विजशूद्रकाः ॥
बहवश्च प्रजा जाता नानादेशनिवासिनः” ॥ * ॥

अथ बल्लालकृतश्रेणिविभागः ।

“अथ बल्लालभूपश्च अम्बष्ठकुलनन्दनः ।
कुरुतेऽतिप्रयत्नेन कुलशास्त्रनिरूपणम् ॥
आदिशूरानीतविप्रान् शूद्रांश्चैव तथापरान् ।
एतेषां सन्ततीः सर्व्वा आनयत् स निजालये ॥
यत्र यत्र स्थिता विप्रास्तत्र ग्रामे निरोपिताः ।
श्रेणीद्वयन्तु निर्णीतं राढीवारेन्द्रसंज्ञितम् ॥
तथैव द्विविधं प्रोक्तं कुलञ्च सद्विजोत्तमे ।
शूद्रस्याथ चतस्रश्च नृपेण श्रेणयः कृताः ॥
उत्तरदक्षिणराढौ च बङ्गवारेन्द्रकौ तथा ।
इति चतस्रः संज्ञाः स्युस्तत्तद्देशनिवासनात् ॥
कुलं चतुर्व्विधं तेषां श्रेणीश्रेणीविशेषतः” ॥ * ॥

अथ बङ्गजकायस्थश्रेणिनिर्णयः ।

“तत्र बङ्गेषु यैः शूद्रैर्निवासः क्रियतेऽधुना ।
तेषां निर्णयमाचक्षे कुलस्यैव विशेषतः ॥
वसुवंशे च मुख्यौ द्वौ नाम्ना लक्ष्मणपूषणौ ।
घोषेषु च समाख्यातश्चतुर्भुजमहाकृती ॥
गुहे दशरथश्चैव मित्रे तारापतिस्तथा ।
दत्ते नारायणश्चैव एते च बङ्गजाः स्मृताः” ॥

अपरन्तु ।

“नागे दशरथश्चैव महानन्दस्तु नायकः ।
चन्द्रशेखरदासस्तु सेने गङ्गाधरस्तथा ॥
दामोदरकरः ख्यातो दामस्तथापतिस्तथा ।
पालिते जनसंज्ञः स्यात् चन्द्रे नारायणाख्यकः ॥
पाले श्रावः समाख्यातो राहावंशे च कर्णकः ।
भद्रे दिगम्बरश्चैव धरे तु व्याससंज्ञकः ॥
प्रभाकरस्तु नन्दी स्यात् केशवो देववंशजः ।
श्रीपतिरिति ख्यातः कुण्डवंशे प्रकीर्त्तितः ॥
सोमे वंशधरश्चैव सिंहे रत्नाकरस्तथा ।
नारायणः समाख्यातो रक्षिते च तथापरे ॥
वेदगर्भाशुरश्चैव दैत्यारिर्विष्णुसंज्ञकः ।
आढ्ये त्रिलोचनः ख्यातो नन्दने च उमापतिः ॥
एते बङ्गजनिर्द्दिष्टा बल्लालेन महात्मना ।
अन्येऽपि शूद्रा विख्यातास्तत्र देशनिवासिनः ॥
ते बङ्गजाः समाख्याताः करणेषु प्रतिष्ठिताः” ॥ * ॥

अथ बङ्गजकुलीनादिनिरूपणम् ।

“कुलीन इति संज्ञा स्यात् मध्यन्यश्च तथापरः ।
महापात्रोऽधमश्चैव इति संज्ञाचतुष्टयम्” ॥

तद्यथा ।

“वसुर्घोषो गुहो मित्रो दत्तो नागश्च नायकः ।
दासः सेनः करो दामः पालितश्चन्द्रपालकौ ॥
राहो भद्रो धरो नन्दी देवः कुण्डश्च सोमकः ।
रक्षिताङ्कुरसिंहाश्च विष्णुराढ्यश्च नन्दनः ॥
चत्वारोऽग्रास्त्रयो मध्या महापात्राः परे तथा ।
सप्तविंशतिः शूद्राणां बल्लालेन प्रशंसिताः” ॥ * ॥

इति कुलीनमध्यन्यमहापात्राः । अधमान् वक्ष्यामि ।

“हौड़श्च भारकश्चैव धरणीवान एव च ।
आइचः पैसुरश्चैव शानश्च भञ्जविन्दुकौ ॥
गुहश्च वललोधौ च शर्म्मा वर्म्मा च भूमिकः ।
ऊढश्च नन्दकश्चैव राणादित्यौ च पीलकः ॥
खिलश्च शुभचाञ्चौ च बन्धुश्च शाश्विसंज्ञकः ।
हेशश्च सुमगुर्गड्डो राणाराक्षतदाहकाः ॥
दानागणायमामाख्याः श्यामः क्षेमश्च तोषकः ।
वेश्वापि घरवेदौ च भूतार्णवकञ्जकाः ॥
एन्दश्च शक्तिसङ्घौ च क्षेमाशौ वर्द्धनस्तथा ।
हेमश्च बन्धकश्चैव भुञ्जिः कीर्त्तिश्च शीलकः ॥
धनुर्गुणो यशश्चैव मनोरीतिश्च दाडिकः ।
चाकिश्च श्याम पुञ्जिश्च गण्डको नादकस्तथा ॥
रोहश्च होमकश्चैव चापकश्च तथैव च ।
ढोलश्च दूतकश्चेति द्विसप्तत्यधमाः स्मृताः” ॥

एतेषां प्रतिपुरुषक्रमेण कुलार्जनात् महापात्रभावो जायते ॥ * ॥ इति बङ्गजघटकरामानन्दशर्म्मकृतकुलदीपिका ॥

**कायस्था**, स्त्री, (कायस्तिष्ठत्यनया । काय + स्था + घञर्थे कः ।) हरीतकी । इति मेदिनी ॥ आमलकीवृक्षः । इति जटाधरः ॥ काकोली । इत्यमरटीकायां भरतः ॥ एलाद्वयम् । तुलसी । इति राजनिर्घण्टः ॥ कायस्थस्त्रीजातिः । कायस्थपत्नी कायस्थी ॥

**कायिकः**, त्रि, (कायेन निष्पादितः निष्पन्नो वा कायेन निर्वृत्त इति वा । काय + ठञ् ।) शारीरिकः । कायनिष्पन्नः । यथा ।

“अदत्तानामुपादानं हिंसा चैवाविधानतः ।
परदारोपसेवा च कायिकं त्रिविधं स्मृतम्” ॥

इति तिथ्यादितत्त्वम् ॥ (स्त्री, शरीरसम्बन्धिनी चक्रवृद्धिः । यथा मनुः ८ । १५३ ।

“चक्रवृद्धिः कालवृद्धिः कारिता कायिका च या”॥)

**कायिकावृद्धिः**, स्त्री, (गोबलीवर्द्दादीनां कायपरिश्रमसाध्या या वृद्धिः ।) गवादिबलीवर्द्दादिकर्म्मयुता वृद्धिः । यथा ।

“दोह्यवाह्यकर्म्मयुता कायिका समुदाहृता” ॥

इति व्यासः ॥ मूलधनाविरोधिनी प्रत्यब्ददेयपणतदर्द्धादिरूपा वृद्धिः । यथा ।

“कायाविरोधिनी शश्वत् पणार्द्धाद्या तु कायिका” ।

इति नारदः ॥ वृत्तायुधस्तु पणार्द्धाद्या इत्यत्र पणवाह्येति पठित्वा पणस्य मूलधनस्य यावदवस्थानं तावत् शश्वत् वर्षसहस्रमपि उत्तमर्णेन या वाह्यते प्राप्यते सा कायिकेति व्याख्यातवान् तन्नाद्या भोगलाभान्तर्गता अपरा च तद्भिन्ना इति मिश्राः । इति विवादार्णवसेतुः ॥

**कारः**, पुं, (कृ हिंसायां + भावे घञ् ।) वधः । निश्चयः । (धातूनामनेकार्थत्वात् अत्र निश्चयार्थेऽपि ॥ कं सुखं ऋच्छत्यनेन । क + ऋ + करणे + घञ् ।) बलिः । यत्नः । यतिः । (कं सुखं निर्वृतिं ऋच्छतीति । क + ऋ + कर्त्तरि अण् ।) पतिः । इति शब्दरत्नावली ॥ (कं निष्यन्दजलम् ऋच्छतीति ।) तुषारशैलः । इति मेदिनीकरहेमचन्द्रौ ॥ कर्म्मोपपदे कर्त्तृवाचकः । यथा कर्म्मकारः स्वर्णकार इत्यादि । इति व्याकरणम् ॥ क्रिया । यथा करणं कारः क्रिया । इति रामतर्कवागीशः ॥ (अक्षरान्ते तदक्षरवाचकः । यथा ककारः । मकारः । इत्यादिः ॥)

**कारकं**, क्ली, (क्रियाभिरन्वितं इति । भाष्यमते तु करोति क्रियां निर्वर्त्तयतीति । कृ + कर्त्तरि ण्वुल् ।) क्रियानिमित्तं कोवकः सिद्धम् । इति दुर्गसिंहः ॥ फणिभाष्यमते पुं, यथा भवितुः स प्रयोजकः कारकः । तत्तु षड्विधम् । कर्म्म १ यथा रामं नमति । करणम् २ यथा नेत्रैः शिवो दृष्टः । कर्त्ता ३ यथा जनैः शिवो दृष्टः । सम्प्रदानम् ४ यथा हरिः सज्जः सुखं ददातु । अपादानम् ५ यथा विभीषणः पराद्भ्रष्टः । अधिकरणम् ६ यथा देवे शरदि गोविन्दः । इति बोपदेवः ॥ करकोपलोद्भवं जलम् । इति राजनिर्घण्टः ॥

**कारकः**, त्रि, (करोति कर्म्मादिकम् । कृ + “ण्वुल्तृचौ” । ३ । १ । १३३ । इति ण्वुल् ।) कर्त्ता । इति मेदिनी ॥ (यथा मनुः ७ । २०४ ।

“आदानमप्रियकरं दानञ्च प्रियकारकम्” ॥)

**कारकुक्षीयः**, पुं, (कारकुक्षि + छः ।) शाल्वदेशः ।

(तत्र भवः अण् बहुषु तस्य लुक् ।) महेश्वीयजने बहुवचनान्तः । इति हेमचन्द्रः ॥

कारणं, क्ली, (कार्य्यतेऽनेन । णिजन्तात् कृञो ल्युट् ।) येन विना यन्न भवति तत् । तत्पर्य्यायः । हेतुः २ वीजम् ३ । इत्यमरः । १ । ४ । २८ ॥ निमित्तम् ४ प्रत्ययः ५ । इति जटाधरः ॥ (यथा, विष्णुपुराणे । २ । १३ । ३० ।

"यतः प्रधानपुरुषौ यतश्चैतत् चराचरम् ।
कारणं सकलस्यास्य स नो विष्णुः प्रसीदतु" ॥)

कारणत्वमाह । अन्यथासिद्धिशून्यत्वे सति नियतपूर्ब्बवर्त्तित्वम् । तत्त्रिविधम् । समवायिकारणत्वम् १ असमवायिकारणत्वम् २ निमित्तकारणत्वम् ३ परमाणुपरिमाणभिन्नानां कारणत्वम् । इति भाषापरिच्छेदः । १६-१७ ॥ अणुपरिमाणन्तु न कस्यापि कारणम् । इति सिद्धान्तमुक्तावली (यथा, रघुः रामायणे । १ । ६४ । ११ ।

"बहुभिः कारणैर्देव ! विश्वामित्रो महामुनिः ।
लोभितः क्रोधितश्चैव तपसा चाभिवर्द्धते" ॥)

कारणम् । (कृ वधे + स्वार्थे णिच् भावे ल्युट् ।) वधः । इति मेदिनी ॥ (आदिः । मूलम् । यथा, मनुः । ११ । ८४ ।

"ब्राह्मणः सम्भवेनैव देवानामपि दैवतम् ।
प्रमाणञ्चैव लोकस्य ब्रह्मात्रैव हि कारणम्" ॥

प्रमाणम् । यथा, मनुः । ८ । २०० ।

"सम्भोगो दृश्यते यत्र न दृश्येतागमः क्वचित् ।
आगमः कारणं तत्र न सम्भोग इति स्थितिः" ॥)

इन्द्रियम् । (यथा, गीतायाम् । १३ । २० ।

"कार्य्यकारणकर्त्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते" ॥

"कार्य्यं शरीरं कारणानि सुखदुःखसाधनानीन्द्रियाणि तेषां कर्त्तृत्वे तदाकारपरिणामे"।

इति तट्टीकायां श्रीधरस्वामी ॥) देहः । (यथा, शाङ्कराब्दबोधे । १३ ।

"अनाद्यविद्याऽनिर्ब्बाच्या कारणोपाधिरुच्यते ।
उपाधित्रितयादन्यमात्मानमवधारयेत्" ॥)

साधनम् । (करणमेव स्वार्थे अण् ।) कर्म्म । (यथा, चाणक्ये । २३ ।

"न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचित् रिपुः ।
कारणेन हि जानाति मित्राणि च रिपूंस्तथा" ॥)

कायस्थः । (करणशब्देऽस्य विशेषो ज्ञेयः ॥) वाद्यप्रभेदः । गीतप्रभेदः । इति भरतधृतरत्नकोषः ॥ (आदिकारणत्वात् विष्णुः । यथा महाभारते । १३ । १४९ । ५४ ।

"करणं कारणं कर्त्ता विकर्त्ता गहनो गुहः" ॥

शिवः । यथा शङ्करकृते वेदसारशिवस्तवे ७ ।

"अजं शाश्वतं कारणं कारणानाम्
शिवं केवलं भासकं भासकानाम्" ॥)

कारणगुणोद्भवगुणः, पुं, (कारणगुण उद्भवो यस्य । स चासौ गुणश्चेति कर्म्मधारयः ।) कारणगुणपूर्ब्बकगुणः । तद्यथा । रूपम् १ रसः २ गन्धः ३ अपाकजस्पर्शः ४ द्रवत्वम् ५ स्नेहः ६ वेगः ७ गुरुत्वम् ८ एकत्वम् ९ पृथक्त्वम् १० परिमाणम् ११ स्थितिस्थापकसंस्कारः १२ । इति भाषापरिच्छेदे । ९६ ॥

कारणशरीरं, क्ली, (कारणं अविद्या सैव शरीरम् । अनाद्यविद्याऽनिर्ब्बचनीयं शरीरद्वयकारणमात्रम् । सत्स्वरूपाज्ञानं यदस्ति तत्कारणशरीरमित्याहुः ।) सत्त्वप्रधानमज्ञानम् । (किन्तु वीजावस्थायां सूक्ष्मत्वात् विषयव्यापाररहितस्यान्तःकरणस्य सुतरां सुखस्वरूपेणानुभूयतेऽसौ दशा ।) तत्पर्य्यायः । आनन्दमयकोषः २ सुषुप्तिः ३ । (यदुक्तं वेदान्तसारे । १९ ।

"अस्यापीयमहङ्कारादिकारणत्वात् कारणशरीरं आनन्दप्रचुरत्वात् कोषवदाच्छादकत्वाच्च आनन्दमयकोषः सर्व्वोपरमत्वात् सुषुप्तिः अत एव स्थूलसूक्ष्मशरीरलयस्थानमिति चोच्यते" ॥ अत्र सुबोधिनी यथा ।

"प्रलयकाले हिरण्यगर्भादिप्रपञ्चोत्पादकेश्वरगतसूक्ष्मप्रकृतिवत् सुषुप्तिकाले अहङ्कारादिशरीरोत्पादकसंस्कारमात्रावशिष्टजीवगताज्ञानस्यापि कारणशरीरत्वं इन्द्रियतद्विषयाभावे व्यासङ्गाभावादानन्दप्राचुर्य्यादानन्दमयत्वं आच्छादकत्वात्कोषत्वञ्च युक्तमितिभावः । ननु स्थूलसूक्ष्मशरीरलयस्थानस्य कथं सुषुप्तिशब्दवाच्यत्वमित्याशङ्क्य पूर्ब्बवत् संज्ञाभेद इति वक्तुं तत्र युक्तिमाह सर्व्वोपरमत्वादिति । मध्वीकृतस्थूलशरीरस्य व्यावहारिकस्य स्वाप्नप्रपञ्चस्य स्वकारणेऽज्ञाने लीनत्वात् सर्व्वोपरतिरित्यर्थः । तथा चोक्तम् ।

"जये फेनस्य तरङ्गाणां प्रभायाः स्फुलरङ्गके ।
तस्यापि विलये नीरे तिष्ठन्त्येते यथा पुरा ॥
व्यावहारिक देहस्य लयः स्यात् प्रातिभासिके ।
तल्लये सच्चिदानन्दाः पर्य्यवस्यन्ति साक्षिणि" ॥)

कारणा, स्त्री, (कृ हिंसायाम् । णिजन्तात् कृञो "ण्यासश्रन्थेति" । ३ । ३ । १०७ । युच् ततः टाप् ।) यातना । गाढ़वेदना । इत्यमरः । १ । ९ । ३ ॥ नरकजा यमयातना । इति केचित् । इति भरतः ॥

कारणिकः, त्रि, (करणैः कारणैर्वा चरति । "चरतीति" । ४ । ४ । ८ । ठक् ।) परीक्षकः । इत्यमरः । ३ । १ । ७ ॥

कारणोत्तरं, क्ली, (कारणेन उत्तरम् ।) प्रत्यवस्कन्दनम् । सत्यत्वेनाङ्गीकृत्य तत्प्रतिकूलरूपकारणं भयात् तदा तदुत्तरम् । तत्त्रिविधम् । बलवत् १ तुल्यबलम् २ दुर्ब्बलम् ३ । आद्यं यथा मया त्वत्तः शतं प्रतिगृहीतमिति सत्यं किन्तु तत् परिशोधितम् । द्वितीयं यथा मदीयेयं भूमिः क्रमागतत्वादिति वादिन्युक्ते प्रतिवादिनोऽपि तथोत्तरम् । तृतीयं यथा ममेयं भूमिः क्रमागतत्वात् इति वाद्युक्ते ममेयं भूमिः दशवर्षोपभुज्यमानत्वात् इति प्रत्युत्तरम् । इति व्यवहारतत्त्वम् ॥

कारण्डवः, पुं स्त्री, (अमकाडक इति रमेर्डः । रण्डः । ईषत् रण्डः । "ईषदर्थे" ६ । ३ । १०५ । इति कोः कादेशः । कारण्डं वाति । वा गतौ + "आतोऽनुपेति" । ३ । २ । ३ । कः । कारण्डस्येदं कारण्डं तदाकारं वाति वा ।) हंसविशेषः इत्यमरः । २ । ५ । ३४ ॥ खड़हाँस इति भाषा । (यथा ऋतुसंहारे । शरद्वर्णने ८ ।

"कारण्डवाननविघट्टितवीचिमालाः
कादम्बसारसकुलाकुलतीरदेशाः" ॥)

कारण्डव्यूहः, पुं, बुद्धभेदः । इति त्रिकाण्डशेषः । (बौद्धशास्त्रविशेषः ॥)

कारन्धमी, [न्] पुं, (कर एव कारस्तं धमतीति । ध्मा + इनिः । पृषोदरादित्वात् साधुः ।) कांस्यकारः । धातुवादरतः इति मेदिनी ॥

कारम्भा, स्त्री, (ईषत् रम्भा । कोः कादेशः ।) प्रियङ्गुवृक्षः । इत्यमरः । २ । ४ । ५६ ॥

कारवः, पुं, (का इति रवो यस्य । कुत्सितो रवो यस्येति वा ।) काकः । इति त्रिकाण्डशेषः ॥

कारवल्ली, स्त्री, (कारा इतस्ततो विक्षिप्ता वल्ली यस्याः । यद्वा कुत्सित आरो गतिर्यस्याः । सा चासौ वल्ली चेति ।) कारवेल्लः । काण्डीरः । इति राजनिर्घण्टः ॥

कारवी, स्त्री, (कारं वाति । वा + कः । के जलोपलक्षितवर्षाकाले रवो यस्य । कारवः केकारवो मयूरस्तस्य पुच्छमिवाकारोऽस्त्यस्य अच् । यद्वा कृ हिंसायां स्वार्थे णिच् ततः क्विप् । कारमवति । कर्म्मण्यण् । गौरादित्वात् ङीष् ।) मधुरा । मौरी इति भाषा । दीप्यः । मयूरशिखा । बनमटा इति भाषा । क्षेत्रयमानिका इति केचित् । सुषवी । केले जीरा इति भाषा । हिङ्गुपत्री । हिङ्गेर पाता इति भाषा । इत्यमरभरतौ ॥ कृष्णकारवेल्ली । इति राजनिर्घण्टः । छोट करला इति भाषा ॥

कारवेल्लं, क्ली, (कारं वेल्लति । वेल्ल चलने कर्म्मण्यण् । यद्वा कारेण वातगमनेन वेल्लति चलति गच्छति वा वेल्ल चलने अच् ।) कठिल्लकम् । करला इति भाषा । तत्पर्य्यायगुणाः ।

"कारवेल्लं कठिल्लं स्यात् कारवेल्ली ततो लघुः ।
कारवेल्लं हिमं भेदि लघु तिक्तमवातलम् ।
ज्वरपित्तकफास्रघ्नं पाण्डुमेहकृमीन् हरेत् ।
तद्गुणा कारवेल्ली स्याद्विशेषाद्दीपनी लघुः" ॥

इति भावप्रकाशः ॥ अमरे पुंलिङ्गोऽयम् ॥

कारवेल्लः, पुं, (कारेण वायुवत् गत्या वेल्लति चलतीति । कार + वेल्ल + अच् ।) लताविशेषः । करला इति भाषा । तत्पर्य्यायः । कठिल्लकः २ सुषवी ३ । इत्यमरः । २ । ४ । १५४ ॥ सुषवी ४ सुशवी ५ । इति तट्टीका ॥ कटुकः ६ काण्डकटुकः ७ सुकाण्डः ८ उग्रकाण्डः ९ कठिल्लः १० नासासम्वेदनः ११ पटुः १२ । इति राजनिर्घण्टः । तत्पुष्पगुणाः । धारकत्वम् । रक्तपित्तरोगे सुपथ्यत्वञ्च ॥ तत्फलगुणाः । श्लेष्मकफपित्तनाशित्वम् । रुचिकरत्वञ्च । इति राजवल्लभः ॥

कारवेल्लकः, पुं, (कारवेल्ल एव । स्वार्थे कन् ।) कारवेल्लः । इति रत्नमाला ॥ (क्लीवत्वमपि दृश्यते । यथा सुश्रुते सूत्रस्थाने ४६ अध्याये ।

"तद्वत् कर्कोटकं प्रोक्तं कारवेल्लकमेव च" ॥)

कारवेल्ली, स्त्री, (कारवेल्ल + अल्पार्थे ङीष् ।) क्षुद्र-

तस्य यद्वाञ्छितं किञ्चिद्दृष्टागार्थं तच्च सिध्यति ॥
ततो हैमन्तमासाद्य निवाते निवधेद्धयम् ।
भासोत्थं यवसञ्चाद्यात् पानीयञ्च यथेच्छया ॥
घृतं वा यदि वा तैलं पाने दद्याद्विचक्षणः ।
वाहयेच्च शनैर्नित्यं सर्व्वदोषप्रशान्तये ॥
ततः शिशिरमासाद्य दद्यात्तैलं हि वाजिनाम् ।
पलाष्टकप्रमाणेन यावद्दिनत्रिसप्तकम् ॥
यवोत्थं यवसञ्चाद्यादेकविंशद्दिनानि च ।
यवाभावेऽथ चणकान् दद्यादार्द्रतरान् सदा ॥
तदभावे मसूरांश्च मुद्गादींस्तैलसंयुतान् ।
यवसं चापि तद्देयं नीरोगो जायते हयः ॥
औषधानाञ्च सर्व्वेषां नाशानां नस्यकर्म्मणाम् ।
तैलानाञ्च घृतानाञ्च यवस्य यवसं परम् ॥
पर्व्वतानां यथा मेरुरायुधानाञ्च वज्रकम् ।
तथा सर्व्वोपचाराणां सर्पिः श्रेष्ठतमा यवाः ॥
देवतानां यथा विष्णुर्ब्रह्मा वेदविदां वरः ।
नदीनाञ्च यथा गङ्गा तथा श्रेष्ठा यवा हये ॥
यथोदितः सहस्रांशुर्निःशेषं तिमिरं जयेत् ।
तथा शरीरजान् दोषान् यवाः सर्प्पिरपि च ॥
उपचारक्रियाः सर्व्वाः यवस्तु जनिता हये ।
कृताः स्युर्यवभोज्येन सर्प्पिस्तस्य कृता नरैः ॥
यस्य दत्ता यवा भोज्ये शिशिरे समुपस्थिते ।
तत्कृतापि कृता सर्व्वा यवस्तु जनिता हये ॥
कृताः स्युर्यवभोज्येन सर्प्पिस्तस्य कृता नरैः ।
नीरोगास्तुरगाः सर्व्वे शालिहोत्रमतं यथा ॥
यवस्तु जनिता वाथ क्रिया व्यक्ता तुरङ्गमे ।
तत्तीतास्ते विनाशीयाद्यवभोज्यविवर्जिताः ॥
एवं रक्तविमुक्तानां कृत्वा यत्नेन वाजिनाम् ।
दद्याद्गोमूत्रसंयुक्तां सतैलां च हरीतकीम् ॥
दिनं त्रिसप्तकं यावत् पलपञ्चप्रमाणतः ।
ततः शुद्धिमवाप्नोति निःशेषाद्धिरोद्गमात् ॥
ततो नवतृणाहारं संप्राप्य सुमनोहरम् ।
परां पुष्टिमवाप्नोति नीरोगश्च प्रजायते ॥
न शालौ वाहयेदश्वं प्रावृट्काले कथञ्चन ।
य इच्छेद्वाजिनस्तस्य वाहनं दशमासिकम् ॥
कूपोदकं सदा शस्तं पानाय जलदागमे ।
अभ्यङ्गः कटुतैलेन निर्वातस्थानबन्धनम् ॥
एकाहान्तरितं दद्याल्लवणञ्च विचक्षणः ।
पलद्वयप्रमाणेन मुखनाभिविशुद्धये ॥
मुखरोगमवाप्नोति नात्म्यादविवर्जितः ।
दृष्टाम्भोभिस्तु सिक्ताङ्गस्तत्क्षणात् त्यज्यते हयः ॥
अमुष्मोदकजान् प्राणान् प्राप्नोति शतशः परान् ।
नवोदकप्रधानेन बलहीनश्च जायते ।
तस्मात् सर्व्वप्रयत्नेन प्रावृट्काल उपस्थिते ।
अनेन विधिना प्राज्ञो वाजिनः परिपोषयेत् ॥
ततः शरदमासाद्य बहुसस्यसमन्वितम् ।
शस्तं शालोदनं सप्तपलाष्टपरिसंख्यया ॥
दुग्धं वा केवलं रात्रौ क्वथितं संप्रशस्यते ।
तथान्यदपि यत्किञ्चिन्मधुरं संप्रजायते ॥
पानाय सारसं तोयं यवसं सुमनोहरम् ।
नीलवर्णमुकुष्टाञ्च घृतं प्राशेन संयुतम् ॥
वाहनं च प्रयत्नेन सुस्वल्पमपि वर्जयेत् ॥

परीक्षार्थी यथा वैद्यः कोष्ठस्य च प्रतिक्रिया ।
हयकोष्ठस्य तद्वच्च परीक्षा यवभक्षणे ॥
यथा सांयात्रिकः पारं गन्तोर्वैः स्वस्थतां व्रजेत् ।
तद्वत यवाशनोत्तीर्णाः शुद्धदेहा हयोत्तमाः ॥
अल्पेनापि हि छिद्रेण यथा नश्यति नौर्जले ।
स्वल्पेनापि हि दोषेण यवदोषात्तथैव च ॥
एवं ज्ञात्वा विदग्धेन यवा देयाः प्रयत्नतः ।
प्राग्मतौ रात्रिविशेषेण शिशिरे समुपस्थिते ॥
शुष्का वापि यवा देयाः सर्व्वकालं च वाजिनाम् ।
प्राणदास्ते ततो ज्ञेयाः सर्व्वव्याधिविनाशनाः ॥
यश्चाश्नाति यवानाशु शुष्कांश्च स्वेच्छया सदा ।
न तस्य जायते रोगः कदाचिच्च यवाशभाक् ॥
न च शूलं न च श्वासो न च पीडा न च श्रमः ।
न च रक्तप्रकोपश्च न च वातादिधातवः ॥
योग्योऽशनार्थं वाहानां प्रधानो यव इष्यते ।
यवाभावेऽथ चणका धान्यमन्यतमं परम् ॥
यवाभावेऽथवा दद्यात्कुलत्थांस्तैलसंयुतान् ।
भोजने तुरगेन्द्राणां परां पुष्टिमभीप्सताम् ॥
मुकुष्ठभोजनाद्वाजी पुष्टिं गच्छत्यलौकिकीम् ।
उत्साहं परमं धत्ते स च रोगैर्विमुच्यते ॥
अप्राप्तौ च मुकुष्ठानां मुद्गा देया मनीषिभिः ।
सतैलास्तेऽपि कुर्व्वन्ति पुष्टिं सत्त्वविवर्द्धिनीम् ॥
एते पुष्टिगुणाः प्रोक्ता अश्वकाहारजा हये ।
नान्यस्तस्मादभावेन सर्व्वेषां तान् विनिर्दिशेत् ॥
नान्याञ्छितं प्रशंसन्ति यवसं वाजिनां बुधाः ।
भक्षणार्थं यतस्तस्य दानोत्कृष्टतमुत्तमम् ॥
तदभावे प्रदातव्यं घृतं वा यदि वा पयः ।
शस्यं वा मांसमेवाथ पुष्ट्यर्थं वाजिनां सदा ॥
यस्याश्वः शस्यमश्नाति सदा लवणमिश्रितम् ।
किं तस्य शस्यदानेन यथाभूतेन भूपतेः ॥
शस्याभावेऽथ यवसं शुष्कं वा यस्य वाजिनः ।
दिवानिशमरण्ये च स्वेच्छया संविभुक्तिकाः ॥
ते चापि वाजिनो ज्ञेया यथा शस्यचरास्तथा ।
तथा सर्व्वप्रयत्नेन मृत्स्नान् मधायेद्द्वये ॥
आरोग्यार्थं सुपुष्ट्यर्थमुत्साहार्थं विशेषतः ।
वित्तशयस्य रक्षार्थं हयेन्द्राणां प्रयत्नतः ॥
वसन्तसमये प्राप्ते वाहयेत सततं हयम् ।
सनिम्बं लवणं दद्यात्ताभ्यां तैलं विशेषतः ॥
सर्व्वत्र सम्भवे भोज्यं तैलं वा यदि वा घृतम् ।
न दोषकारणं प्रोक्तं सन्तारं लवणं ततः ॥
वसन्तसमये योऽश्वः स्थाने तिष्ठति बन्धने ।
तस्योत्साहः प्रणश्येत सालस्यं जायते वपुः ॥
ततो मन्दाग्निनाविष्टो रोगाभावे प्रजायते ।
तस्मात् सर्व्वप्रयत्नेन वसन्ते वाहयेद्धयम् ॥
ग्रीष्मकाले च संप्राप्ते दूर्व्वाभोज्यं प्रशस्यते ।
वाजिनामिह सर्व्वेषां सर्व्वतापोपशान्तये ॥
छत्रयानं विशेषेण शुष्कायास्तु निबन्धनम् ।
रक्तसावे च शालीषु यवं वा घृतसंयुतम् ॥
दूर्व्वाभावे प्रदातव्यं तुरगाय घृतान्वितम् ।
शतकाशस्यमध्याम्यं सर्व्वदोषोपशान्तये ॥
एवं ऋत्मयं सम्यगुपचारं करोति यः ।
हयस्य तु यत्नो नित्यं तस्य वर्द्धन्ति वाजिनः ॥

नीरोगाः पुष्टिसंयुक्ताः प्रहृष्टोत्साहसंयुताः ।
तर्पिता भूमिपैरश्वा भूमिमार्गक्रियाक्षमाः ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते ऋतु-
पर्य्यायाध्याय एकादशः ॥

अथ नस्यः ।

कासश्वासशमो नस्यो वातपित्तकफोद्भवः ।
नस्यः संनाशयेत्तस्मात् नस्यं योजयेद्धये ॥
पिप्पली सैन्धवं सारं नागरञ्च गुडान्वितम् ।
कलिकासारमध्याग्रं वाजिनां श्लेष्मनाशनम् ॥
चूलिकालवणं नस्ये सदा रोगविनाशनम् ।
श्विता चन्दनतोयानि सान्तुकाख्यानि वाजिनाम् ।
नस्यकर्म्माणि युक्तानि नाडीवातप्रशान्तये ।
म्रदुकेरार्द्रकं सान्द्रं सचास्तारविमिश्रितम् ॥
नस्ये दत्तं वातशान्त्यै हयरोगविनाशनम् ।
शर्करां माक्षिकं सैरं पटोलं पलसंयुतम् ॥
नस्ये शरदि सम्प्रोक्तं जायते रोगशान्तये ।
वचा चोशानकं कुष्ठं शुण्ठी च कासमर्दिका ॥
युक्तं शीतोदके श्लोके तेषां नस्येऽपसर्पयेत् ।
गुडूची कौमुदी ताली मिश्रिता कूपवारिणा ॥
नस्ये दत्ता वराश्वानां शिशिरे सुखदा स्मृता ।
अपामार्गं महानस्यं सर्व्वरोगविनाशनम् ॥
केवलं कटुतैलं वा गोमूत्रे पाचितञ्च मधु ।
मैथुनादिक्षतश्वानां स्रोतोबलकरं विदुः ॥
कण्ठरोगे तथा नस्यं गोमूत्रलवणान्वितम् ।
महद्गुणकरं प्रोक्तं सर्व्वदोषनिवारणम् ॥
अपामार्गस्य मूलेन नस्यं मूत्रञ्च छागजम् ।
मुखरोगविनाशाय नस्यं मत्स्यवसोद्भवम् ॥
लशुनं पिप्पलीमूलं गजकौ नागकेशरम् ।
दत्तं नस्येन रोगघ्नं कटुतैलेन वाजिनाम् ॥
नस्यं पर्य्युषितैस्तोयैः प्रातर्दत्तं तु केवलैः ।
अश्वानाञ्च नराणाञ्च चाक्षुष्यं बलवर्द्धनम् ॥
पिप्पलीमिश्रतोयेन ससितासलिलेन च ।
नस्यं यच्छति सप्तेभ्यो सर्पिषा यच्छते बलम् ॥
नस्यं स्निग्धं तथा रूक्षं तिक्तञ्च मधुरं तथा ।
चतुर्द्धा वाजिशास्त्रज्ञैर्यथावत्परिकीर्त्तितम् ॥
देयं वाताधिके स्निग्धं रूक्षं तिक्तं कफाधिके ।
मधुरं चैव पित्ताढ्ये तुरङ्गे समयोचितम् ॥
द्विपलाशत्प्रमाणं वा श्रेष्ठं तन्नस्यमुच्यते ।
पादोनं मध्यमं तत्र षड्विंशत्या तथाधमम् ॥
नस्यान्ते वाजिनो रक्तं सदा पुष्टं प्रजायते ।
नस्यदानात् स्रुतं तस्य विनाशमुपगच्छति ॥
दाडिमं पुष्करं शीर्कं श्वेतदूर्व्वाङ्कुरास्तथा ।
शीतोदकेन संयुक्तं रक्तं दुष्टं न जायते ॥
धातकी गोक्षुरं रोध्रं कुसुम्भं सिन्धुवारकम् ।
शीतोदकेन संयुक्तं नस्यं रक्तविनाशनम् ॥
धातकी गजकी चैव गोमूत्रं लवणं तथा ।
नस्ये दत्तं कफं हन्ति तमः सूर्य्योदये यथा ॥
शुण्ठी घृतञ्च दुग्धञ्च रससारं तथैव च ।
बालदोषविनाशाय नस्यमेतत्प्रयोजयेत् ॥
माक्षिकं शर्करायुक्तं चन्दनं केशराणि च ।
नस्योऽयं वारिणा सद्यः पित्तनाशकरः परः ॥
गुडूची शुण्ठी मुस्ता च तगरं सितसर्षपाः ।

सन्निपाते समस्तेऽयं नस्यः स्यात्क्षीरजालकः ॥
अभया पुष्करी धात्री रास्ना लाक्षा शतावरी ।
सन्निपातेऽनिलाधिक्ये नस्योऽयं क्षेमकारकः ॥
मरिचं पिप्पलीमूलं वचा भारङ्गिकाभया ।
सन्निपाते कफाधिक्ये नस्यं सर्प्पिः सुखप्रदम् ॥”
इति श्रीनकुलकृतेऽश्वचिकित्सिते नस्याधिकाराध्यायो द्वादशः ॥

अथ पिण्डः ।

“कटुका च जयन्ती च भ्रामरी सुरसा घना ।
पञ्चाम्लसमयः पिण्डो वाजिनामयनिष्कृत् ॥
रास्ना शतघ्नी सुरसा काकजङ्घा शतावरी ।
माक्षिकं ससितं पिण्डः पित्तयुक्ते हि वाजिनि ॥
मालकं सैन्धवं मुस्ता गोमयञ्च हरीतकी ।
समभागेन पिण्डोऽयमुक्तो वह्निप्रदीपकः ॥
कंकोलं केतकी द्राक्षा शर्करा मधुयष्टिका ।
दत्तो घृतयुतः पिण्डः पुष्टिं नयति वाजिनः ॥
मत्स्यमांसेन संयुक्तं माषचूर्णं घृतप्लुतम् ।
बलहीनस्य वाहस्य पिण्डोऽयं बलवर्द्धनः ॥
बला मद्यं दधि क्षौद्रं भक्षयंस्तुरगो भवेत् ।
अतिवृद्धोऽपि कृश्योऽपि यथा वटसमवायिकः ॥
मेथिका धातकी काली सारणी बीजपूरकः ।
पिण्डो दत्तो वराश्वानां तेजोवृद्धिकरः स्मृतः ॥
कटुका मद्यसंमिश्रा धात्री लोध्रगुडान्विता ।
दत्ता पिण्डविधानेन वाजिनां सुखवृद्धिदा ॥
त्रिफला कटुका मुस्ता विडङ्गानि च चित्रकम् ।
सदालस्यसमेतानां वाजिनां पिण्ड आर्त्तिहृत् ॥
चणा विदलिताः स्निग्धाः सघृताः क्षारभाविताः ।
पिण्डैर्दत्ताः प्रकुर्व्वन्ति वाजिनां व्याधिनाशनम् ॥
सैन्धवं नागरं श्यामा गुडूची सितसर्षपाः ।
अम्लवेतसमश्वानां पिण्डोऽयं शूलनाशनः ॥
पिप्पली पिप्पलीमूलं कटुका सहदेविका ।
दूर्व्वापल्लवसंमिश्रः पिण्डोऽयं शोथनाशकः ॥
केशरं श्रीफलं तालं माक्षिकं गिरिकर्णिका ।
पिण्डोऽयं शयने शस्तो वाजिनां सुगतिप्रदः ॥
वचा लोध्रं सकर्पूरं गुञ्जा श्यामा गुडं मधु ।
समांशकेन पिण्डोऽयं करोति लघुतां हये ॥
मद्यं मरिचसंयुक्तं लशुनं नागकेशरम् ।
हिङ्गुयुक्तं मेषमांसञ्च पिण्डो दत्तो जयेच्छ्रमम् ॥
जम्बीरं पद्मिनीपत्रं त्वचा किञ्जल्कमेव च ।
आतपशोषितवाहानां पिण्डोऽयं रक्तनाशनः ॥
तमालं पुष्करं लोध्रमपामार्गं सतिन्दुकम् ।
पयसा पिण्डमेतद्धि वातकोपप्रणाशनम् ॥
आरनालं प्रविष्टा च पथ्या नेपालिकाफलम् ।
पिण्डे दत्ते हये दद्या निहन्त्याशु विषूचिकाम् ॥
सुरपूगं वचामिश्रं तथा सर्व्वरसान्वितम् ।
पिण्डे दत्ते निहन्त्याशु क्रमिवंशं प्रयोद्भवम् ॥
जम्बीरं सकर्पूरं कूपीरकविभावितम् ।
पिण्डोऽयं हन्ति मध्यस्थान् रोगान् सर्व्वान् क्रमिप्रभान् ॥
सिता दुग्धं सकर्पूरमेलया पक्वसंयुतम् ।
अचिरादर्त्तियुक्तानां पिण्डोऽयं वाजिनां स्मृतः ॥
शीघ्रासन्नप्रसन्नानामारनालं परिप्लुतम् ।
सहदिच्छन्ति पिण्डेन वाजिनां सुखकारकम् ॥
हृष्टिवातार्दितानाञ्च वाजिनां पुष्टिलम्पटः ।
पिण्डः ख्यातः सतैलेन लशुनेन मदेन च ॥
महाघृतं सकर्पूरं शर्करा दुग्धमेव च ।
कफनाशकरः प्रोक्तः पिण्डोऽयं सुखदः स्मृतः ॥
रोचना च वरी ब्राह्मी तथा व्याघ्रीजपूरकः ।
गुञ्जां प्रशमयन्त्याशु वाजिनां हृदयोद्भवम् ॥
सहदेवी वचा कुष्ठं वरुणा चेन्द्रवारुणी ।
अतिभारं हरन्त्येते वाजिनां मधुना सह ॥
उदुम्बरफलं मांसं शौकरं माहिषं दधि ।
हयस्य चातिवृद्धस्य करोति परमं सुखम् ॥
बिभीतकं प्रियङ्गुश्च सर्ज्जिका लवणं तथा ।
कासदोषोपशमनः पिण्डः सर्प्पिः सुखप्रदः ॥
तक्रं कर्पूरचूर्णञ्च शिवं सौवर्च्चलान्वितम् ।
पिण्डोऽयं वस्तिसंरोधे वाजिनः संप्रकीर्त्तितः ॥
सौवर्च्चलं हरिद्रा च पिप्पली चेन्द्रवारुणी ।
मूत्रकृच्छ्रे प्रयोजन्ति पिण्डोऽयं तुरगस्य हि ॥
पिण्डीरसन्तापः क्षौद्रं भल्लातकफलं वृषम् ।
रक्तमूत्रे तु पिण्डोऽयं वाजिनां रक्तनाशनः ॥
अभया यष्टिका श्यामा देवदारु सगन्धकम् ।
पुरीषे रक्तसंमिश्रे सदा शंसति वाजिनः ॥
पटोलं धातकी मुस्ता यष्टिका गिरिकर्णिका ।
रक्ताधिक्ये स्मृतः पिण्डः करोति रुधिरक्षयम् ॥
हरिद्राद्वयसंयुक्तं गन्धकं कटुतैलकम् ।
पिण्डकं श्रुतियुक्तानां सदाश्वानां प्रशस्यते ॥
अतसीपञ्चकं निम्बं न्यग्रोधकलिकान्वितम् ।
अतीसारे प्रशंसन्ति पिण्डोऽयं वाजिनः शुभः ॥
अर्शः क्रमिभिरत्यर्थं सदा वाजी प्रपीड्यते ।
तदा पिण्डः प्रदातव्यः स्थूलैरक्तदलैरलम् ॥
कर्पूरशर्करालोध्रं माक्षिकं त्रिफलान्वितम् ।
तुरङ्गिरयाःप्रशंसन्ति पिण्डोऽयं वाजिनःशुभः ॥
पञ्चकं सिन्धुवारञ्च भ्रामरं चक्रकिंशुकम् ।
मांसवृद्धौ प्रशंसन्ति पिण्डोऽयं वाजिनः शुभः ॥
सैन्धवं चूलिकाचारं विडङ्गानि मधूनि च ।
शस्त्रपीडाभिभूतस्य पिण्डोऽश्वस्य प्रशस्यते ॥”
इति श्रीनकुलकृतेऽश्वचिकित्सिते पिण्डाध्यायस्त्रयोदशः ॥

अथ घृतविधानम् ।

“शिलाजतु विशाला च पद्मकं नागकेशरम् ।
लाक्षा पद्मकन्दञ्च निम्बद्वयसमन्वितम् ॥
घृतं माक्षिकसंयुक्तं सप्तविंशतिकं विदुः ।
अष्टांशं तु समादाय सुरामांसघृतस्य च ॥
पलमात्राणि सर्व्वाणि पूर्व्वद्रव्याणि निःक्षिपेत् ।
तेषां दानेन तत्तर्पिर्जायते सर्व्ववाजिनाम् ॥
बलपुष्टिकरं नित्यं सर्व्ववातविनाशनम् ।
सर्व्वरोगप्रशमनं कायाग्नेश्च प्रदीपनम् ॥
ओजस्करं वयानाशं शोषयोनप्रणाशनम् ।
धातकी केशरं कुष्ठं कुसुम्भं कुङ्कुमं नलम् ॥
दाडिमं त्रिफलोध्रञ्च पलमात्राणि निःक्षिपेत् ।
घृतञ्च पाचयेत् पानादभिघातान्वितो हयः ॥
जायते सर्व्वसुखाढ्यो महाप्राज्ञैश्च संशयः ।
आरनालं वचा कुष्ठं पिप्पला त्रिकटुकं घृतम् ॥
एतैः पक्वं घृतं सम्यक् पित्तव्याधिविनाशनम् ।
हरिद्राद्वयसंयुक्तं गन्धकं तु मनःशिला ॥
क्वाथयेन्नवनीतेन त्रिगुणेन घृतेन च ।
अभ्यङ्गनाथ पानेन सप्तरात्रेण वाजिनः ॥
कक्षूतिर्निःक्षयं याति तथोदरभवा व्रणाः ।
माक्षिकं निम्बपत्राणि नक्तं गुग्गुलु एव च ॥
भृङ्गराजो विशाला च पाठा चैव पुनर्नवा ।
बिल्वमात्मककं लोध्रं सैन्धवं तगरं तथा ॥”
एतैः पक्वा घृतं वाजी संशाप्यार्त्तैर्विमुच्यते ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते घृताध्यायश्चतुर्द्दशः ॥

अथ क्वाथः ।

“पूर्व्वोक्तसमभागानि क्वाथयेत् कूपवारिणा ।
ततोऽष्टांशं समादाय लोयस्य क्वथितस्य च ॥
एतत् सिद्धार्थकं नाम सुरसदं सर्व्ववाजिनाम् ।
कायाग्निं वर्द्धयत्याशु नीरोगत्वं प्रयच्छति ॥
मुस्ता मधुकपत्राणि केशरं लवणं वचा ।
शलाका शाल्मली धात्री त्रपुषं पद्मिनी तथा ॥
क्वाथयित्वा जलं क्षौद्रं दत्तैस्तुष्टो विचक्षणः ।
त्रिभागमेवमादाय ततो दद्याद्धयस्य च ॥
प्रकरोति सदा नाशं पित्तस्यागन्तुकस्य च ।
एकविंशदिनं यावत्कालिकोत्तमतं यथा ॥
शुण्ठी हरीतकी पाठा ब्राह्मी मुस्ता शिवाक्षिका ।
हरिद्राद्वयसंयुक्ता हरितालं मनःशिला ॥
त्रिवृत्त्रिभागशेषोऽयं क्वाथो हन्याज्जिराश्चिकम् ।
सन्निपातमशेषञ्च पलिकः पलमात्रकः ॥
मधुकं केशरं पत्रं भल्लातकविभीतकम् ।
शङ्खपुष्पं वचा क्षारं समभागेन मिश्रितम् ॥
कासार्त्तस्य सुहितः क्वाथोऽयं त्रिफलात्मकः ।
उत्साहवर्द्धकः सद्यस्तथा कायाग्निदीपकः ॥
कुमारी शाल्मली पाठा मञ्जिष्ठा चेन्द्रवारुणी ।
काकोली समभागेन क्वाथयेत् समभागतः ॥
पलद्वयप्रमाणेन ततः पीतेन वाजिना ।
मोचयेच्छूलजं दोषं मूत्रदोषं च तत्क्षणात् ॥
यवानी माक्षिकं कासं सौवर्च्चलयुताभया ।
क्वाथयेदष्टमांशेन तत्पानाज्जायते हयः ॥
प्रदीप्ताग्निस्तु तेजस्वी सर्व्वरोगाद्विमुच्यते ।
स शीघ्रमार्गगामी च स्निग्धो रोगविवर्ज्जितः ॥
सेफालिका वचानीले वेणुका सिन्धुवारिका ।
एतैः क्वाथः स्मृतः सम्यक् क्रमिनाशकरः परः ॥
मातुलुङ्गस्य बीजानि चन्दनं सितसर्षपाः ।
उशीरं पुष्करं ब्राह्मी लज्जगा च पुनर्नवा ॥
क्वाथोऽयं मुष्टिचूर्णेन धावितश्लेष्मनाशनः ।
प्रकरोति तुरङ्गाणां सर्व्वदैव सुखं तथा ॥”
इति श्रीनकुलकृतेऽश्वचिकित्सिते क्वाथाध्यायः पञ्चदशः ॥

अथ विषम् ।

“वारुणी माक्षिकी गौरी श्रीतालीबीजपूरकम् ।
क्रमिक्लेदविनाशाय क्वाथो नित्यं दयाकरः ॥
अश्वगन्धा घृतं क्षौद्रं विषदग्धस्य वाजिनः ।
विषनाशं करोत्येव सर्व्वगात्रेषु तत्क्षणात् ॥
सामान्येन प्रदिष्टोऽयमगदो विषनाशनः ।

पृथक् पृथग्विभागेन कर्त्तव्यं साध्यतः परम् ॥
त्रिविधं कीर्त्तितं चैव कृत्रिमञ्च ततःपरम् ।
त्रिविधं कीर्त्तितं प्राज्ञैर्विषज्ञानविचक्षणैः ॥
स्थावरं कन्दजं प्रोक्तं जङ्गमं सर्व्वसंस्थितम् ।
कृत्रिमं योगजं प्रोक्तं त्रिविधं विषमुच्यते ॥
यदा स्थिरं समश्नन्ति कदाचित्तुरगोत्तमाः ।
तदा कार्य्यं विधानज्ञै रगदस्य प्रयोजनम् ॥
केयूरं पद्मनालञ्च सौपर्णी बदरीफलम् ॥
तक्रमिश्रं हये दत्तं सर्व्वथा विषनाशनम् ॥
सौपर्णी सिन्धुवारञ्च नागवल्ली जटा तथा ।
विषार्त्तं प्राप्य संमिश्रं दुग्धे स्यादायुधी हयः ॥
अश्वगन्धा वचा मूला घृतमिश्रा प्रयोजिता ।
विषनाशं नयत्याशु जङ्गमं हयगात्रतः ॥
मूलं चन्दनवृक्षस्य नागचूर्णपरिप्लुतम् ।
जङ्गमस्य विषस्याशु प्रकरोति च संक्षयम् ॥
तक्रं केयूरसंयुक्तं विषं सद्यो नवात्मकम् ।
हयस्य जङ्गमं नाशं विषमयति तत्क्षणात् ॥
सौपर्णी विषकङ्कोली पिष्टा मद्येन भाविता ।
जङ्गमं गात्रतः कृत्स्नं विषं नयति तत्क्षणात् ॥
मूला कङ्कोलिकामूलं सौपर्णीघृतमिश्रितम् ।
विषनाशं करोत्याशु नस्यदानेन वाजिनाम् ॥
कौसुम्भं केयूरं लाक्षा माचिका नाकुली तथा ।
कृत्रिमस्य विषस्याशु प्रकरोति च संक्षयम् ॥
चम्पकं मालतीमूलसुक्तकरसं तथा ।
अश्वानां नाशयत्याशु विषं जङ्गमसम्भवम् ॥”
इति श्रीनकुलकृतेऽश्वचिकित्सिते विषयोगाध्यायः षोडशः ॥

अथ अश्वशालाविधिः ।

“नृपवेश्मवामभागे शुभदिने तु कारयेद्धयागारम् ।
पूज्यश्रियं प्रयत्नाद्द्विजैःसवत्सं प्रतिष्ठाप्य ॥
सुशुभे भूमिविभागे पूर्व्वोत्तरजलप्लवविधानात् ।
तस्मिन् शालां चित्रां दृढस्तम्भसमुच्छ्रितां दृढां कुर्य्यात् ॥
द्वारनकोष्ठकमस्मिन् हस्तत्रितयं समुच्छ्रितं कुर्य्यात् ।
संस्थाप्य वृषभगावौ सप्ताहं वाजिशालायाम् ॥
अत ऊर्द्ध्वन्तु तुराग्निः प्रवेशयेद्वाजिनो यथायोग्यम् ।
कुशलैस्सरलोदर्हैरनुकूलैः स्थानपालैश्च ॥
कृतमङ्गलसंस्काराः सन्ध्यायाञ्च चोत्तराभिमुखाः ।
नात्यायता न शिथिलाः स्थाने वा दक्षिणाभिमुखम् ॥
वैद्यानां तुरगाय समीपं गृहं कारयेत् पूर्व्वम् ।
कार्य्यासितेन सर्व्वेण माक्षिकाणां निवारणम् ॥
गन्धैर्माल्यैर्धूपैः स्थानानि विभूषयेदलङ्कारैः ।
सविशेषं त्वश्वपीतौ कुत्याग्निं पूरयेद्विद्वान् ॥
स्वच्छन्दं नातियवसं यथा पश्यन्ति वाजिनः ।
स्थानं चैव पृथक् प्राप्तं प्रयत्नं रोगिणां न वै ॥
कोष्ठी कुष्ठी ज्वरी यक्ष्मी परस्परं दूषयति वारैः ।
तिथिवारे केशाञ्च खुराञ्च प्रशन्ति दीर्घान् ॥
अश्वस्याङ्गे प्रक्षिपेद्धरिद्रया वरिष्ठया मञ्जकाञ्च ।
सुपवित्राम् रोचनैर्विभूषयेदलङ्कारैः ॥”
इति श्रीनकुलकृतेऽश्वचिकित्सितेऽश्वशालाविधिरष्टादशोऽध्यायः ॥ सप्तदशाध्यायस्तु नाधिगम्यते ॥

अथ ग्रहनामलक्षणानि ।

“दृश्यन्ते यानि लिङ्गानि ग्रहदोषेण वाजिनाम् ।
तानि सम्यक् प्रवक्ष्यामि ग्रहनामानि यानि तु ॥
लोहिताक्षो विरूपाक्षो हरिर्वैनतस्तथैव च ।
सकाश्यो चैव विख्यातः सङ्काश्यो च परः स्मृतः ॥
सुसंस्थितश्च कौवेरो वैयाघ्रश्च रुद्रग्रहः ।
ऊर्द्ध्वश्च दारुणश्चैव मरुविधो वरुणग्रहः ॥
दृढस्थितश्च सोमश्च तथा सूर्य्यग्रहोऽपरः ।
एते प्रोक्ता ग्रहाः सर्व्वे दारुणा मुनिसत्तमैः ॥
एतैर्हताः स्फुटं वाहा नैव जीवन्ति सर्व्वदा ।
चिह्नं सर्व्वं प्रवक्ष्यामि यथा शास्त्रे व्यवस्थितम् ॥
कम्पते पूर्व्वकायस्तु निश्चलो यस्य पश्चिमः ।
पश्चात्ताङ्गो सकम्पश्च खिद्यते हरिपीड़ितः ॥
भवन्ति विन्दवो रक्ता अकस्माद् यस्य चक्षुषः ।
हरिताश्चग्रहीतोऽश्वो श्वासहर्षो च जायते ॥
प्रस्विन्नगुरुगात्रश्च शुष्कवक्त्रमवाक्षिपः ।
मीलतोन्मीलता चाक्ष्णा स्वभावान्नित्यमेव च ॥
विरूपाक्षगृहीते तु कम्पः स्वेदश्च जायते ।
उत्थितः सहसा यस्तु मूर्च्छां पतति भूतले ॥
सन्धाक्षो मुच्यते केशैस्तथा बालैः खुरैरपि ।
वलिग्रहगृहीतोऽसौ स्तब्धकर्णशिरोधरः ॥
अकस्माद् यस्य लोमानि शीर्य्यन्ते यश्च लङ्घति ।
मूत्रयत्यश्मपादस्य तस्य काश्यग्रहं वदेत् ॥
सहसा कुपितो वाजी स्वानि गात्राणि खादति ।
शीर्य्यते सततञ्चैव सङ्काश्यग्रहपीड़ितः ॥
खिन्नाङ्गो वेपमानश्च जानुभ्यां यश्च तिष्ठति ।
कौवेरग्रहसन्दृष्टं तं विद्यात् करुणीक्षितम् ॥
धूयते सततं यस्तु पश्चादात्मानमीक्षते ।
सुसंस्थितग्रहाविष्टः स विज्ञेयो मनीषिभिः ॥
स्तब्धेन गुरुणा चैव वेपमानेन पक्षितः ।
गात्रेण विद्याद् वाहं तु वैयाघ्रग्रहसेवितम् ॥
ग्रीवां चैव तथा जिह्वां परिवर्त्त्य मुहुर्मुहुः ।
जृम्भते पूर्व्वकायेन शीतोच्छ्वासी विलोचनः ॥
रोहिणीस्वाहतः पृष्ठे कशया पाणिनापि वा ।
तं वै दीर्घस्वरग्रस्तं रुद्रैव परिवर्जयेत् ॥
श्यामं जिह्वामुखं यस्य नष्टदृष्टिहृतनिर्भवेत् ।
ऊर्द्ध्वग्रहकृतं दोषं तस्य दीनस्य निर्द्दिशेत् ॥
तालुजिह्वे च नेत्रे च वृषणौ मेढ्रमेव च ।
श्यावं रूपञ्च यस्य स्याद् गात्रगौरवमेव च ॥
तस्य स्वेदपरीतस्य बुद्धिमान् वरुणग्रहैः ।
कृतं दोषं महाघोरं स्तब्धाङ्गस्य विनिर्द्दिशेत् ॥
धूयते सततं यस्तु क्रूररोमा तुरङ्गमः ।
स्तब्धाक्षो जृम्भतेऽत्यर्थं तस्यापि सलिलग्रहः ॥
सुविस्फारितसर्व्वाङ्गः सलिले निश्चलस्थितः ।
धूयते विस्तरं वाजी वरुणग्रहपीड़ितः ॥
सुदूर्णावस्थितस्तोये जानुभ्यां योऽवगच्छति ।
मुखपाकश्च यस्यास्ते तं विद्यादुदकग्रहम् ॥
उद्वर्त्तिताक्षः खिन्नश्च संग्रहीतहनुश्च यः ।
कम्पमानश्च यो वाजी स रविग्रहपीड़ितः ॥
स्तब्धग्रीवो न जानाति कशाघातं मुहुर्मुहुः ।
अतयग्रहगृहीतोऽश्वो वामपार्श्वेन निश्चलः ॥
मूत्राक्षिकूटो रक्ताक्षः कृशः स्खलति यो मुहुः ।
दृढस्थितग्रहीतोऽसौ नैव जीवति तादृशः ॥
कम्पते पूर्व्वकायेन स्तब्धपानाशनश्च यः ।
धूते प्रसार्य्य गात्राणि शीताङ्गः सोमपीड़ितः ॥
रक्ताक्षः शूनकण्ठश्च कम्पमानश्च श्वासयुक् ।
पीतनीराङ्गखेदश्च मत्तः सूर्य्यग्रहेण सः ॥
उदके तत्समीपे वा प्रायो गृह्णाति दारुणः ।
तुरङ्गं सत्त्वहीनन्तु बद्धो वारुणग्रहः ॥
यज्ञभूमिचिताचैत्यशून्यदेवसुरालये ।
लोहिताक्षादयो दोषाद् ग्रहा गृह्णन्ति वाजिनः ॥
एवंविधैर्निदानैस्तु ग्रहदोषं विनिर्द्दिशेत् ।
वातपित्तकफानान्तु निदानैर्व्याधिमादिशेत् ॥
एकाकारेण रोगेण म्रियते वा हयो यदा ।
तुरङ्गाणां तदा ज्ञेया उपसर्गाः सुदारुणाः ॥
ग्रहदोषेषु सर्व्वेषु उपसर्गास्तथैव च ।
अथोक्ताश्च महाशान्तिं गान्धर्व्वीञ्च प्रयोजयेत् ॥
अश्वरक्षाविधानाय जप्तं सम्पाद्य पावकम् ।
जुहुयाद्धृतसंयुक्तं शुचिः स्नात्वा सुपूजितः ॥
शान्तिकं कारयेत् कर्म्म बलिञ्चापि प्रयोजयेत् ।
ग्रहदोषेषु सर्व्वेषु शान्तिकर्म्माणि कारयेत् ॥
देवद्विजप्रव्रजितगुरुवृद्धान् यतीनपि ।
तोषयेद्भोजनैर्दानैर्वस्त्रगोकाञ्चनादिभिः ॥
रात्रौ शालासमीपे तु बलिं दद्यात् चतुर्दिशम् ।
मत्स्यमांसैश्च पक्वान्नैः सुरैः पायसादिभिः ॥
त्रिरात्रं पञ्चरात्रं वा सप्तरात्रमथापि वा ।
नीराजनविधिं कृत्वा नयेदश्वान् पृथक् पृथक् ॥”
इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे ग्रहगृहीतचिकित्सितं सप्तपञ्चाशत्तमोऽध्यायः ॥)

घोटिका, स्त्री, (घोटते परिवर्त्तते कठ्ठादिगुणैरिति । घुट् + ण्वुल् । ततष्टापि अत इत्वम् ।) वृक्षभेदः । तत्पर्य्यायः । कर्कटी २ तुरङ्गी ३ चतुरङ्गा ४ । अस्या गुणाः । कटुत्वम् । उष्णत्वम् । मधुरत्वम् । वातश्लेष्मकण्डुकुष्ठश्वयथुनाशित्वञ्च । इति राजनिर्घण्टः ॥

घोणा, स्त्री, (घोणते गृह्णाति वस्तुगन्धम् । घुण + अच् टाप् च । घोणतेऽनया इति करणे घञ् वा ।) नासा । (यथा, महाभारते । १ । १५६ । ३३ ।
“दीर्घघोणं महोरस्कं विकटोद्धृतपिण्डिकम् ॥”
“घोणायां द्वे ॥” इति सुश्रुते शारीरस्थाने पञ्चमाध्याये ॥) अश्वनासिका । तत्पर्य्यायः । प्रोथः २ । इत्यमरः । २ । ८ । ४६ ॥ (यथा, अश्ववैद्यके । ५ । ७ ।
“नासाक्षिशाखिमध्ये तु घोणाख्यः समुदाहृतः ।
घोणापार्श्वगतौ गण्डौ चौरिके च ततः परम् ॥”)

घोणी, [न्] पुं, (प्रशस्ता घोणा अस्त्यस्य इति । “ब्रीह्यादिभ्यश्च ।” ५ । २ । ११६ । इति इनिः ।) शूकरः । इत्यमरः । २ । ५ । २ ॥

घोण्टा, स्त्री, (घुण्यते गृह्यते भक्षणायेति । घुण + बाहुलकात् टः ।) वृक्षविशेषः । गुवाकुल

इति भाषा ॥ तत्पर्य्यायः । बदरः २ गोपघोण्टा ३ शृगालकोलिः ४ कपिकोलिः ५ । इति काचित् रत्नमाला ॥ हस्तिकोलिः ६ वदरीच्छदा ७ कर्कन्धुः । इति रत्नकोषः ॥ पूगवृक्षः । इति मेदिनी । टे । १४ ॥ ( यथा, उत्तरस्थाने विंशेऽध्याये वाभटेनोक्तम् ।

"घोण्टाफलत्वक्लवणं सलाक्षं
वृक्षस्य पत्रं वनितापयश्च ।
स्नुगर्कदुग्धान्वित एष कल्को
वर्त्तीकृतो हन्त्यचिरेण नाडीम् ॥")

घोनसः, पुं, ( गोनसः + पृषोदरादित्वात् साधुः । ) गोनसः । तिलित्सर्पः । इति हेमचन्द्रः । ४ । ३६२ ॥ ( क्वचित् महर्ग्यमध्योऽपि दृश्यते ॥ )

घोरं, क्ली, ( हन्यते वध्यतेऽनेनेति । हन् + "हन्तेरच् घुर् च ।" उणां । ५ । ६४ । इति अच् धातोर्घुरादेशश्च ।) विषम् । इति राजनिर्घण्टः ॥

घोरः, पुं, ( घोरयति भयानकत्वनिमित्तीभवतीति । घुर + अच् । यद्वा, हन्ति विनाशयति रुद्ररूपेण इति । हन वधे + "हन्तेरच् घुर् च ।" उणां । ५ । ६४ । इति अच् धातोर्घुरादेशश्च । ) शिवः । भयानके त्रि । इति हेमचन्द्रः ॥ ( यथा, मनुः । १२ । ५४ । [यथा,]
"बहून् वर्षगणान् घोरान्नरकान् प्राप्य तत्संसारान् प्रतिपद्यन्ते महापातकिनस्त्विमान् ॥")

घोरदर्शनः, पुं स्त्री, (घोरं भयानकं दर्शनं यस्य ।) उलूकः । इति राजनिर्घण्टः ॥ भयानकरूपे त्रि ॥ ( यथा, रामायणे । १ । १ । ५५ ।
"मार्गमाणो वने सीतां राक्षसं सन्ददर्श ह ।
कबन्धं नाम रूपेण विकृतं घोरदर्शनम् ॥" )

घोरपुष्पं, क्ली, कांस्यम् । इति राजनिर्घण्टः ॥ घोरपुष्पमपि पाठः ॥

घोररासनः, पुं, ( घोरं भयानकं रासनं शब्दो यस्य । ) शृगालः । इति शब्दरत्नावली ॥

घोररासी, [न्] पुं, (घोरं यथा तथा रसति शब्दं करोतीति । रस शब्दे + णिनिः । ) शृगालः । इति हेमचन्द्रः । ४ । ३५६ ॥

घोरा, स्त्री, ( घोरति भयानकत्वनिमित्तीभवतीति । घुर + अच् + टाप् च । ) रात्रिः । इति त्रिकाण्डशेषः ॥ देवदाली लता । इति राजनिर्घण्टः ॥ (गङ्गा । यथा, काशीखण्डे ।२९।५५।
"घण्टारवप्रिया घोराऽघौघविध्वंसकारिणी ॥"
रविसंक्रान्तिविशेषः । इति ज्योतिषम् ॥ यथा, तिथितत्त्वे रविसंक्रान्तिप्रकरणे ।
"मन्दा मन्दाकिनी ध्वांक्षी घोरा चैव महोदरी ।
राक्षसीमिश्रिता प्रोक्ता संक्रान्तिः सप्तधा नृप ! ॥
मन्दा ध्रुवेषु विज्ञेया मृदौ मन्दाकिनी तथा ।
क्षिप्रे ध्वांक्षी विजानीयादुग्रे घोरा प्रकीर्त्तिता ॥")
भयानका ॥ ( यथा, कालीध्याने ।
"करालवदनां घोरां मुक्तकेशीं चतुर्भुजाम् ॥")

घोलं, क्ली, (घुण्यते आलोड्यते यत् । घुट + अच् । पृषोदरादित्वात् साधुः ।) ससरं निर्जलं मथितं दधि । ( यथा, सुश्रुते सूत्रस्थाने ४५ अध्याये ।
"यत्तु सस्नेहमजलं मथितं घोलमुच्यते ।" )
तत्पर्य्यायः । दण्डाहतम् २ कालशेयम् ३ अरिष्टम् ४ गोरसः ५ तक्रम् ६ मथितम् ७ केवलम् ८ अमृतसम्भवम् ९ । तस्य भेदाः ।
"तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्द्धाम्बु निर्जलम् ।
ससारं मथितं तक्रं तत् प्रकीर्त्तितम् ॥"
इति शब्दचन्द्रिका ॥
अस्य विशेषाः तक्रशब्दे द्रष्टव्याः ॥

घोली, स्त्री, पत्रशाकविशेषः । तत्पर्य्यायः । घोलिका २ घोलिः ३ कलम्बुः ४ क्षुद्रकालुका ५ । चिञ्चालाया अस्या गुणाः । लघुत्वम् । रुचिकारित्वम् । अम्लत्वम् । वातकफनाशित्वञ्च ॥ आरामघोलिकागुणाः । अम्लत्वम् । रूक्षत्वम् । गुरुत्वम् । वायुनाशित्वम् । पित्तश्लेष्मकारित्वञ्च । वन्याया जीर्णज्वरनाशित्वम् । इति राजनिर्घण्टः ॥

घोषं, क्ली, (घोषति शब्दायते इति । घुष विशब्दने + अच् ।) कांस्यम् । इति राजनिर्घण्टः ॥

घोषः, पुं, ( घोषन्ति शब्दायन्ते गावो यस्मिन् । घुषिर् विशब्दने + "हलश्च ।" ३ । ३ । १२१ । इति घञ् ।) आभीरपल्ली । (यथा, रघुः ।१।४५।
"हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान् ।
नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनाम् ॥"
घोषति शब्दायते इति । घुष + कर्त्तरि अच् । ) गोपालः । ( घुष + भावे घञ् । ) ध्वनिः । ( यथा, मनुः । ७ । २२५ ।
"तत्र भुक्त्वा पुनः किञ्चित् तूर्य्यघोषैः प्रहर्षितः ।
संविशेत् यथाकालमुत्तिष्ठेच्च गतक्लमः ॥")
घोषकलता । कांस्यम् । मेघशब्दः । इति मेदिनी । षे । ११ ॥ मशकः । इति त्रिकाण्डशेषः ॥ ( वर्णोच्चारणबाह्यप्रयत्नविशेषः । यदुक्तं शिक्षायाम् । २० ।
"संवृतं मात्रिकं ज्ञेयं विवृतं तु द्विमात्रिकम् ।
घोषा वा संवृताः सर्व्वे अघोषा विवृताः स्मृताः ॥")
कायस्थादीनां पद्धतिविशेषः । (यथा, कुलदीपिकायाम् ।
"वसुवंशे च मुख्यौ द्वौ नाम्ना लक्षणपूषणौ ।
घोषेषु च समाख्यातश्चतुर्भुजमहाकृती ॥")

घोषकः, पुं, (घोष एव । घोष + संज्ञायां कन् ।) घोषालता । तत्पर्य्यायः । धामार्गवः २ । इत्यमरः । २ । ४ । ११७ ॥ घोषकाकृतिः ३ आदाली ४ देवदाली ५ सुरङ्गकः ६ घोषः ७ घोषालता ८ । इति शब्दरत्नावली ॥ कोषकालः ९ । इति जटाधरः ॥ महाघोषा तु हस्तिघोषातकी ॥ * ॥ पीतघोषायाः पर्य्यायः । धामार्गवः १ पीतघोषा २ राजघोषातकी ३ कर्कोटकी ४ महाजाली ५ मृदङ्गः ६ कोषफला ७ कोषातकी ८ । इति च जटाधरः ॥ * ॥ श्वेतघोषायाः पर्य्यायः । घोषातकी १ कृतच्छत्रा २ जालिनी ३ कृतवेधनः ४ श्वेतपुष्पा ५ आकृतिच्छत्रा ६ ज्योत्स्ना ७ इति रत्नमाला ॥

घोषकाकृतिः, पुं, ( घोषकस्य घोषलताया आकृतिरिवाकृतिर्यस्य । ) घोषकः । इति रत्नमाला ॥

घोषणा, स्त्री, ( घुषिर् विशब्दने + "ण्यासश्रन्थो युच् ।" ३ । ३ । १०७ । इति युच् । ) उच्चैःशब्दः । लोकविज्ञापनार्थोच्चैःशब्दितम् । (यथा, कथासरित्सागरे । २४ । ५० ।
"शुश्राव भ्रमन् तत्रैव पुरे पटहघोषणाम् ॥")
तत्पर्य्यायः । उच्चैर्घुष्टम् २ । इत्यमरः ।१।६।१२॥ निघुष्टम् ३ सुघोषणम् ४ । इति शब्दरत्नावली ॥

घोषयित्नुः, पुं, ( घोषयतीति । घुष + णिच् + बाहुलकात् इत्नुच् । ) ब्राह्मणः । कोकिलः । बन्दी । इति शब्दरत्नावली ॥

घोषवती, स्त्री, ( घोषो विद्यतेऽस्याः । घोष + मतुप् मस्य वः । स्त्रियां ङीप् । ) वीणा । इति हेमचन्द्रः ॥ ( यथा, कथासरित्सागरे ।११।३।
"स बभूव शने राजा मृगयैकान्ततत्परः ।
सदा शिशिवे रतया वीणां घोषवतीञ्च ताम् ।
दत्तां वासुकिना पूर्व्वं नप्त्रे त्रिगमवादयत् ॥"
तथाच तत्रैव । १२ । १९ ।
"अङ्के घोषवती तस्य कण्ठे गीतश्रुतिस्तथा ॥")
शब्दविशिष्टे त्रि ॥ ( यथा, महाभारते । १ । २५ । ११ ।
"त्वं वज्रमतुलं घोरं घोषवांश्च बलाहकः ॥")

घोषा, स्त्री, ( घोषन्ति मधुकरा यया । घुष + णिच् + घञ् । ) मधुरिकौषधिः । मौरी इति भाषा । इति मेदिनी ॥ ( यथा, गारुडे १९ अध्याये ।
"घोषाफलं सैन्धवञ्च तण्डुलाम्बु पचेत्तथा ॥" )
कर्कटशृङ्गी । इति राजनिर्घण्टः ॥ ( गङ्गा । यथा, काशीखण्डे । २९ । ५५ ।
"प्राज्ञतुष्टिकरी घोषा घनानन्दा घनप्रिया ॥"
गायत्रीरूपा भगवती । यथा, देवीभागवते । १२ । ६ । ४४ ।
"हविर्मन्त्रमयी घोषा घनसम्पत्तिदायिनी ॥" )

घोषातकी, स्त्री, श्वेतघोषा । इति रत्नमाला ॥ (पर्य्यायोऽस्या यथा, वैद्यकरत्नमालायाम् ।
"घोषातकी कृतच्छत्रा ज्योत्स्ना जालिनी कृतवेधनः ।
श्वेतपुष्पा कृतिच्छत्रा ज्योत्स्ना कोषातकी
क्वचित् ॥")

घ्रा, गन्धोपादाने । इति कविकल्पद्रुमः ॥ ( भ्वां-परं-सकं-अनिट् । ) जिघ्रति पुष्पं लोकः । इति दुर्गादासः ॥

घ्राणं, क्ली, ( जिघ्रत्यनेनेति । घ्रा + करणे ल्युट् । यद्वा, घ्रा + क्तः "नुदविदोन्दत्राघ्रेति ।" ८ । २ । ५६ । इति निष्ठातस्य नो वा ।) नासिका । इत्यमरः । २ । ६ । ८९ ॥ ( यथा रघुः । १९ । ११ ।
"घ्राणकान्तमधुगन्धकर्षिणीः
पानभूमिरचनाः प्रियासखः ॥" )
घ्रायमते घ्राणेन्द्रियग्राह्यगन्धत्वादि । ( घ्रा + भावे ल्युट् । आघ्राणम् । यथा, देवीभागवते । १ । १४ । २४ ।
"आलिलिङ्ग सुतं मूर्ध्नि घ्राणं तस्य चकार ह ॥")
घ्राते त्रि । इति मेदिनी । णे । ११ ॥

घ्राणतर्पणः, पुं, (घ्राणमिन्द्रियविशेषं तर्पयतीति । तृप् + ल्युः ।) सुगन्धिः । इत्यमरः । २।५।११ ॥ (यथा, रामायणे । २ । ९४ । १४ ।
"घ्राणतर्पणमभ्येत्य कं नरं न प्रहर्षयेत् ॥")

घ्राणदुःखदा, स्त्री, (घ्राणस्य दुःखं ददातीति । दा + कः । स्त्रियां टाप् ।) छिक्कनी । इति भावप्रकाशः ॥

घ्रातः, त्रि, (घ्रा + क्तः । "नुदविदेति ।" ८ । २ । ५६ । इति पाक्षिको नत्वाभावः ।) गृहीतगन्धपुष्पादिः । घ्राण कर्मीया इति सोँका इति च भाषा । तत्पर्यायः । घ्राणः २ । इत्यमरः । ३ । १ । ९० ॥ शिङ्घितः ३ । इति जटाधर-शब्दरत्नावल्यौ ॥ (यथा, मनुः । ५ । १२५ ।
"पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम् ।
दूषितं केशकीटैश्च मृत्प्रक्षेपेण शुध्यति ॥")

घ्रातिः, स्त्री, (जिघ्रत्यनया । घ्रा + करणे क्तिन् ।) नासिका । इति शब्दचन्द्रिका ॥ (भावे क्तिन् । आघ्राणम् । यथा, मनुः । ११ । ६७ ।
"ब्राह्मणस्य रुजः कृत्वा घ्रातिरघ्रेयमद्ययोः ॥")

## ङ

ङ, ङकारः । स तु व्यञ्जनपञ्चमवर्णः । अस्योच्चारणस्थानं सनासिककण्ठः । इति व्याकरणम् ॥ ("जिह्वामूले तु कुः प्रोक्तः ।" इति ।
"अनुस्वारयमानाञ्च नासिकास्थानमुच्यते ॥"
इति च शिक्षोक्तत्वाच्च ॥)
अस्य स्वरूपं यथा, कामधेनुतन्त्रे ।
"ङकारं परमेशानि ! स्वयं परमकुण्डली ।
सर्व्वदेवमयं वर्णं त्रिगुणं लोललोचने ! ॥
पञ्चप्राणमयं वर्णं ङकारं प्रणमाम्यहम् ॥"
अपि च ।
"ऊर्द्ध्वाधःक्रमतो रेखा किञ्चिदाकुञ्चिता ततः ।
अधोगता कुण्डली तु मात्रा शक्तिस्वरूपिणी ॥
रेखात्रयेषु ब्रह्मेशविष्णवः सन्ति देवताः ॥"
ध्यानं यथा, वर्णोद्धारतन्त्रे ।
"धूम्रवर्णां महाघोरां ललज्जिह्वां चतुर्भुजाम् ।
पीताम्बरपरीधानां साधकाभीष्टसिद्धिदाम् ॥
एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत् ॥"
तस्य नामानि यथा,—
"ङः शङ्खी भैरवश्चण्डो बिन्दूत्तंसः शिशुप्रियः ।
एकरुद्रो दपनखः खर्परो विषयस्पृहा ॥
कान्तिः श्वेताङ्कुशो घोरो द्विजात्मा ज्वालिनी वियत् ।
मन्त्रशक्तिश्च मदनो विघ्नेशी चात्मनायकः ॥
एकनेत्रो महानन्दो दुर्द्धरश्चन्द्रमा यतिः ।
शिवयोषा नीलकण्ठः कामेशी च [illegible] ॥"
इति नानातन्त्राणि ॥
(मातृकान्यासे अस्य दक्षिणकराङ्गुल्यग्रेषु न्यस्यता ॥)

ङः, पुं, (ङ्यते शब्द इन्द्रियैरिति । ङु + बाहुलकात् डः ।) विषयः । विषयस्पृहा । इति मेदिनी । ङे । १ ॥ भैरवः । इत्येकाक्षरकोषः ॥ (यथा, स्तुतिमञ्जर्य्याम् ।
"ङकारादिते ! ङलिम्बिते ! ङकारवर्णरूपिणि ! ॥")

ङु, ङ ध्वनौ । इति कविकल्पद्रुमः ॥ (भ्वा-आत्मं-अकं-अनिट् ।) ङ, ङवते । इति दुर्गादासः ॥

# च

च, चकारः । स तु व्यञ्जनषष्ठवर्णः । ( द्वितीयवर्गस्याद्यवर्णश्च ।) अस्योच्चारणस्थानं तालु । इति व्याकरणम् ॥ (यदुक्तं सिद्धान्तकौमुद्याम् । "इचुयशानां तालु ।" इति । तथा च शिक्षायाम् । "कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू ॥")
वर्णोद्धारतन्त्रे अस्य स्वरूपं यथा, कामधेनुतन्त्रे ।
"चवर्णं शृणु सुश्रोणि ! चतुर्वर्गप्रदायकम् ।
कुण्डलीसहितं देवि ! स्वयं परमकुण्डली ॥
सततं कुण्डलीयुक्तं पञ्चदेवमयं सदा ।
पञ्चप्राणमयं वर्णं पञ्चप्राणात्मकं सदा ॥
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं प्रिये ! ॥"
अपि च ।
"वामांकुशस्तु आकार ऊर्द्धाधः क्रमतो गतः ।
रेखाश्रयेषु चन्द्रादित्यवह्नयस्तिष्ठन्ति नित्यशः ।
शक्तिर्मात्रा तु विज्ञेया ध्यानमस्य प्रचक्ष्यते ॥"
तस्य ध्यानं यथा, वर्णोद्धारतन्त्रे
"तुषारकुन्दपुष्पाभां नानालङ्कारभूषिताम् ।
सदा षोडशवर्षीयां वराभयकरां पराम् ॥
शुक्लवस्त्राद्वृतकटिं शुक्लवस्त्रोत्तरीयिणीम् ।
वरदां शोभनां रम्यामष्टबाहुसमन्विताम् ॥
एवं ध्यात्वा चकारन्तु तन्मन्त्रं दशधा जपेत् ॥"
तस्य नामानि यथा, नानातन्त्रे ।
"चः पुष्करो ह्रली वाणी चामरश्चित्सुदर्शनः ।
चर्म्मसुक्ष्मधरो भूता मक्षिवाचारवासिनी ॥
एकरूपो रविः कूर्म्मश्चामुण्डा दीर्घबालुकः ।
वामबाहुर्मूलमाया चतुर्भि(?)स्वरूपिणी ॥
इयिनश्च द्विनेत्रश्च लक्ष्मीश्चित्तस्वलोचनः ।
चन्दनं चन्द्रमा देवश्चेतनो हविको बुधः ॥
देवी केटसुखेन्धाता कौमारी पूर्व्वफाल्गुनी ।
अनङ्गमेखला वायुर्मेदिनी च कलावती ॥"
(मात्रकान्यासे वामबाहुमूले एवास्य न्यस्तता ॥)
च, व्य (चयति चिनोतीति वा । चय शब्दे चिञ् चित्यां वा+"अन्येष्वपि दृश्यते ।" ३ । २ । १०१ । इति डः । ) अन्वाचयः । यत्र एकस्य प्राधान्येनापरस्य गौणत्वेनान्वयं सोऽन्वाचयः । यथा । भो वटो ! भिक्षामट गाञ्चानय । भिक्षामटनमत्र प्रधानं तत् कुर्व्वाणो यदि गां पश्यसि तदा तामप्यानयेति नो चेत् भिक्षामेवाटेति । समाहारस्तिरोहितावयवभेदः इतरेतर उद्भिन्नावयवभेदः । अतएव चार्थे द्वन्द्व इति सूत्रं विधाय चार्थोऽत्र समाहार इतरेतरश्चेति व्याख्याय समाहारे अनभिव्यक्तावयवत्वात् एकवचनम् । इतरेतरयोगे संहन्यमानप्रधानत्वात् द्विवहुवचनम् । यथा । "पाणिपादं अश्ववलीवर्द्दौ अक्षत्रियविट्शूद्राः । प्लक्षन्यग्रोधाविति भरतमल्लिकम् । समुच्चितिः समुच्चयः प्राधान्येन क्वचित् क्रियाविषयेऽनेकस्य चीयमानता । यथा । धवांश्च खदिरांश्च छिन्धि । इति भरतः ॥ समाहारः । अन्योन्यार्थः । समुच्चयः । (यथा, मनुः ।१२।८८। "इह चामुत्र वा काम्यं प्रवृत्तं कर्म्म कीर्त्त्यते ॥")

प्रत्यान्तरम् । ( यथा, हितोपदेशे ।
"मूर्खोऽपि शोभते तावत् सभायां वस्त्रवेष्टितः ।
तावच्च शोभते मूर्खो यावत् किञ्चिन्न भाषते ॥"
तथा च शकुन्तलायां १ मे अङ्के ।
"शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य ।
अथवा भवितव्यानां द्वाराणि भवन्ति सर्व्वत्र ॥")
पादपूरणम् । ( यथा, रामायणे । १ ।२० ।१८ ।
"तेन सञ्चोदितौ तौ तु रामसौ च मत्कृतौ ।
मारीचश्च सुबाहुश्च यज्ञविघ्नं करिष्यतः ॥" )
अवधारणम् । इति मेदिनी । चे । १२ ॥ हेतुः । इति त्रिकाण्डशेषः ॥
चः, पुं, ( चयति शब्दायते इति । चय शब्दे+ "अन्येष्वपि दृश्यते ।" ३ । २ । १०१ । इति डः ।) चन्द्रः । (चिनोति स्वाङ्गानि सङ्कोचयतीति । चि+डः । ) कच्छपः । ( चीयते उपचीयते क्रमशः कलाभिः प्रतिपदादिमारभ्येत्यर्थः । ) चन्द्रः । ( चिनोति सञ्चिनोति परधनानि इति ।) चौरः । इति मेदिनी ॥ चे । १ ॥ निर्व्वीजे दुर्ज्जने च त्रि । इति शब्दरत्नावली ॥
चक, इ आप्तौ । चौचो धातुरयम् । इति कविकल्पद्रुमः ॥ ( भ्वां-परं-अकं-सेट् ।) इ, चङ्कुरः रथः । इति दुर्गादासः ॥
चक, ञ ङ म प्रतिघाते । तृप्तौ । इति कविकल्पद्रुमः ॥ ) भ्वां-उभं-आत्मञ्च-सकं-अकञ्च-सेट् ।) ञ, चकति चकते खलः साधुम् । ङ, चकते जनस्तृप्यतीत्यर्थः । म, चकयति । इति दुर्गादासः ॥
चकास, ऋ ल लु दीप्तौ । इति कविकल्पद्रुमः ॥ (अदां-परं-अकं-सेट् ।) ऋ, अचीचकासत् अचचकासत् । अनेकस्वरान् सन्वद्भावविकल्पः । ल, चकास्ति । लु, चकास्ति । इति दुर्गादासः ॥
चकितं, त्रि, ( चक आप्तौ+क्तः ।) भीतम् । इति त्रिकाण्डशेषः ॥ (यथा, कलाविलासे ।२।८।
"दृष्ट्वा दिशि दिशि दृष्टिं यावकचकितोऽवगुण्ठनं कृत्वा ।
चौर इव कुटिलचारी पलायते विकटरथ्याभिः॥"
क्ली, भावे क्तः । भयम् । नायिकालङ्कारविशेषः । तल्लक्षणं यदुक्तं साहित्यदर्पणे । ३ । १२१ ।
"कुतोऽपि दयितस्याग्रे चकितं भयसम्भ्रमः ॥")
"प्रियाग्रे चकितं भीतेरस्थानेऽपि भयं महत् ।"
इत्युज्ज्वलनीलमणिः ॥
(स्त्री, छन्दोविशेषः । यथा, छन्दोमञ्जर्य्याम् ।
"भात् समनगैरष्टच्छेदे स्यादिह चकिता ॥")
चकोरः, पुं स्त्री, (चकते चन्द्रकिरणेन तृप्यतीति । चक तृप्तौ+"कठिचकिभ्यामोरन् ।" उणां । १ । ६४ । इति ओरन् ।) पक्षिविशेषः । (यथा, भागवते । ३ । २१ । ४३ ।
"सारसैश्चक्रवाकैश्च चकोरैर्वल्गुकूजितम् ॥")
तत्पर्य्यायः । चन्द्रिकापायी २ कौमुदीजीवनः३
अस्य मांसगुणाः । यथा, राजनिर्घण्टे ।

"चटकं शीतलं वल्यं हृद्यं कापिञ्जलामिषम् ।
तद्वच्चकोरजं मांसं तृष्णाघ्न बलपुष्टिदम् ॥"
("मांसत्वेनाधिको ज्ञेयः शीतलः शुक्रवर्द्धनः ।
आम्नरी कृन्ति विशदो बलश्लेष्मविलम्बनाः ॥
चकोरः शुक्रचारी च समदोषा गुणागुणैः ॥"
इति चारीते प्रथमस्थाने एकादशेऽध्याये ॥
अस्य त्रिगुणा यथा, चरके सूत्रस्थाने२७अः ।
"शार्ङ्गदाकृष्णकोराणां दक्षाणां शिखिनामपि ।
चटकानाञ्च यानि स्युरण्डानि च हितानि च ॥
रेतःक्षीणेषु कासेषु हृद्रोगेषु क्षतेषु च ।
मधुराण्यविपाकीनि सद्यो बलकराणि च ॥")
चकोरकः, पुं स्त्री, ( चकोर एव । चकोर+ स्वार्थे कन् ।) चकोरपक्षी । इत्यमरः ।२।५।३५॥
चक्क, क व्यर्थे । इति कविकल्पद्रुमः ॥ (चुरां-परं-सकं-सेट् ।) कोपधः । आद्यस्वरमध्यः । व्यथिः पीडनम् । क, चक्कयति शत्रुं शूरः । इति दुर्गादासः ॥
चक्रं, क्ली, ( क्रियतेऽनेनेति । कृ+घञर्थे कः । लक्षादीनामिति द्वित्वञ्च । ) व्रजः । समूहः । सैन्यम् । रथाङ्गम् । चाका इति भाषा ॥ (यथा, याज्ञवल्क्ये । १ । ३५१ ।
"यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् ।
तथा पुरुषकारेण विना दैवं न सिध्यति ॥" )
राष्ट्रम् । दम्भविशेषः । कुम्भकारोपकरणम् । कुमारेर चाक इति भाषा ॥ ( यथा, याज्ञवल्क्ये । ३ । १४६ ।
"मृद्दण्डचक्रसंयोगात् कुम्भकारो यथा घटम् ।
करोति तृणमृत्काष्ठैर्गृहं वा गृहकारकः ॥")
अस्त्रविशेषः । ( यथा, रघुः । ७ । ४६ ।
"आधोरणानां गजसन्निपाते
शिरांसि चक्रैर्निशितैः क्षुराग्रैः ॥")
जलावर्त्तः । इति मेदिनी ॥ भगवतः सुदर्शनचक्रम् । ( यथा, महाभारते । १ । १९ । ६ ।
"ततो भगवता तस्य शिरश्छिन्नमलङ्कृतम् ।
चक्रायुधेन चक्रेण पिबतोऽमृतमोजसा ॥" )
तस्य भगवन्मन्दिरे स्थापनविधिर्यथा, श्रीभागवते । ३ । १ । २३ ।
"अन्यानि चेह द्विजदेवदेवैः
कृतानि नानायतनानि विष्णोः ।
प्रत्यङ्गमुख्याङ्कितमन्दिराणि
यद्दर्शनात् कृष्णमनुस्मरन्ति ॥"
"द्विजदेवैः ऋषिभिर्देवैश्च कृतानि आयतनानि प्रति वर्त्तन्ते इति प्रत्यङ्गान्यायुधानि तेषु मुख्यं चक्रं तेनाङ्कितानि अर्द्धचन्द्रमकुम्भेषु चिह्नितानि मन्दिराणि येषु तानि नानाविधानि विष्णोरायतनानि चैत्राणि तीर्थानि च आसिषेवे । येषां चक्राङ्कितमन्दिरवतां दर्शनात् श्रीकृष्णस्मरणं भवति ।" इति तट्टीकायां श्रीधरस्वामी ॥॥
अथ चक्रलक्षणम् ।
"द्वादशारन्तु षट्कोणं वलयत्रयसंयुतम् ।
चक्रं स्याद्दक्षिणावर्त्तं शक्रञ्च श्रीधरः स्मृतः ॥"
इति श्रीहरिभक्तिविलासे ६ विलासः ॥

ग्रामजालम्। इति त्रिकाण्डशेषः॥ तगरपुष्पम्। इति राजनिर्घण्टः॥ व्यूहविशेषः। (एतस्य लक्षणं यथा,—

"अष्टारं वर्त्तुलाकारं व्यूहचक्रं त्रिनाडिकम्।
दलचतुष्टयं बाह्ये कर्त्तव्यञ्च चतुर्दिशम्॥
पूर्व्वदलाग्रतोऽन्यस्य दिगभागे भमण्डलम्।
प्रवेशे निर्गमे चैव चौणि चौणि प्रदक्षिणे॥
शशिनं चाष्टकं मध्ये तद्बाह्ये भानुसंज्ञकम्।
तृतीयं राहुसंज्ञञ्च केतुर्दलचतुष्टये॥
चन्द्रर्क्षे विजयो लाभः सूर्य्यर्क्षे मध्यमं फलम्।
राहुधिष्ण्याष्टके विघ्नं मृत्युः केतुचतुष्टये॥
एवमुक्तं चतुःस्थाने वहिर्भे यस्य नामभम्।
तद्विने तत् फलं तस्य सर्व्वकार्य्येषु सर्व्वदा॥"

एतच्चक्रन्तु भगवता द्रोणाचार्य्येण अभिमन्युवधार्थमेवाभिकल्पितम्। तत्र व्यूहमध्ये निर्म्माणप्रकारश्च कः कुत्र आसीदिति प्रदर्शयितुमाह।

"चक्रव्यूहो महाराज! आचार्य्येणाभिकल्पितः।
तत्र शक्रोपमाः सर्व्वे राजानो विनिवेशिताः॥
अवस्थानेषु विन्यस्ताः कुमाराः सूर्य्यवर्च्चसः।
संघातो राजपुत्त्राणां सर्व्वेषामभवत्तदा॥
कृताभिसमयाः सर्व्वे सुवर्णविकृतध्वजाः।
रक्ताम्बरधराः सर्व्वे सर्व्वे रक्तविभूषणाः॥
सर्व्वे रक्तपताकाश्च सर्व्वे वै हेममालिनः।
चन्दनागुरुदिग्धाङ्गाः स्रग्विणः सूक्ष्मवाससः॥
सहिताः पर्य्यधावन्त कार्ष्णिं प्रति युयुत्सवः।
तेषां दशसहस्राणि बभूवुर्दृढधन्विनाम्॥
पौत्त्रं तव पुरस्कृत्य लक्ष्मणं प्रियदर्शनम्।
अन्योन्यसमदुःखास्ते अन्योन्यसमसाहसाः॥
अन्योन्यं स्पर्द्धमानाश्चाप्यन्योन्यस्य हिते रताः॥
दुर्य्योधनस्तु राजेन्द्र! सैन्यमध्ये व्यवस्थितः।
कर्णदुःशासनकृपैर्वृतो राजा महारथैः॥
देवराजोपमः श्रीमान् श्वेतच्छत्राभिसंवृतः।
चामरव्यजनाक्षेपैरुदयन्निव भास्करः॥
प्रमुखे तस्य सैन्यस्य द्रोणोऽवस्थितनायकः।
सिन्धुराजस्तथाऽतिष्ठत् श्रीमान् मेरुरिवाचलः॥
सिन्धुराजस्य पार्श्वस्था अश्वत्थामपुरोगमाः।
सुतास्तव महाराज! त्रिंशत्त्रिदशसन्निभाः॥
गान्धारराजः कितवः शल्यो भूरिश्रवास्तथा।
पार्श्वतः सिन्धुराजस्य व्यराजन्त महारथाः॥
ततः प्रववृते युद्धं तुमुलं लोमहर्षणम्।
तावकानां परेषाञ्च मृत्युं कृत्वा निवर्त्तनम्॥"

इति महाभारते। ७। ३३। १३—२४॥)

तैलयन्त्रम्। इत्यमरटीकायां स्वामी॥ (यथा, आर्य्यासप्तशत्याम्। ५६९।

"स्नेहमयान् पीडयतः किं चक्रेणापि तैल- [कारस्य॥"

कालज्ञापकयन्त्रविशेषः। यथा, गोलाध्याये।

"चक्रं चक्रांशाङ्कं परिधौ शयच्छलादिकाधारम्।
धात्री त्रिभ आधारात् कल्प्या भार्द्धेऽत्र खार्द्धेञ्च॥
तन्मध्ये सूक्ष्माक्षं क्षिप्त्वार्काभिमुखनेमिकं धार्य्यम्।
भूमेरुन्नतभागास्तत्राक्षच्छायया मुक्तः॥ [लम्।
तत्खार्द्धान्तश्च नता उन्नतनतसंगुणीकृतं द्युद-
द्युदलोन्नतांशभक्तं नाद्यः स्थूलाः परैः प्रोक्ताः॥"

धातुमयं दारुमयं वा समं चक्रं कृत्वा तन्नेम्यां शयच्छलादिराधारः शिथिलः कार्य्यः। चक्रमध्ये सूक्ष्मं सुषिरमाधारात् सुषिरोपगामिनी लम्बवत् रूर्द्धरेखा कार्य्या। तन्मध्यतोऽन्या तिर्य्यग्रेखा चात्र कार्य्या। तच्चक्रं परिधौ भगणांशैरङ्कयित्वाधारात् त्रिभ इति नवतिभागान्तरे तिर्य्यग्रेखा तत्परिधिसम्पाते धात्री क्षितिः कल्प्या। भार्द्धेऽन्तर ऊर्द्धरेखानेमिसम्पाते खार्द्धं कल्प्यम्। सुषिरे सूक्ष्मा शलाका प्रदातव्या। सा चाक्षसंज्ञा। तच्चक्रमर्काभिमुखनेमिकञ्च यथा भवति तथाधारे धार्य्यम्। तथा धृतेऽक्षस्य छाया परिधौ यत्र लगति तत्कुजचिह्नयोरन्तरे ये अंशास्ते रवेरुन्नतांशाः। ये छायाखार्द्धयोरन्तरे ते नतांशा ज्ञेयाः। एवमत्र नतोन्नतांशज्ञानमेव भवति। अतोऽन्ये घटिका आनेतव्याः। तद्यथा, तस्मिन् दिने गणितेन मध्यन्दिनोन्नतांशान् दिनार्द्धमानञ्च ज्ञात्वानुपाततः। यदि मध्यन्दिनोन्नतांशैर्दिनार्द्धनाड्यो लभ्यन्ते तदैभिः किमित्येवं स्थूला घटिकाः स्युः॥ अथ वेधेन ग्रहज्ञानमाह।

"मैत्रर्क्षपुष्याग्निमवारुणाना-
म्भद्वयं नेमिगतं यथा स्यात्।
दूरेऽन्तरेऽल्पेषु भवेच्चरौ वा
तथात्र यत्नं सुधिया प्रधार्य्यम्॥
नेमिस्थभस्याभिगतं प्रपश्येत्
खेटञ्च धिष्ण्यस्य च योगताराम्।
नेम्यङ्कयोरन्तगुणोऽस्तु मध्ये
येऽंशाः स्थिता भध्रुवको युतस्तैः॥
प्रत्यक्स्थिते भेऽथ पुरःस्थिते तै
र्हीनो ध्रुवः स्यात् खचरस्य भुक्तम्॥"

तत्र यन्त्रस्याधो नेम्यां दृष्टिं कृत्वोर्द्धनेम्यामुक्तानां मध्ये भद्वितयं युगपन्नेमिगतं यथा स्यात् तथा यन्त्रं स्थिरं कृत्वा। नेम्यां धिष्ण्ययोरेकतरं स्थानमङ्कयेत्। ततोऽग्रे पृष्ठतो वा दृष्टिं चालयित्वा ग्रहं विध्येत्। ग्रहः प्रायोऽल्पगतो दृश्यते। अनन्तरस्य ग्रहस्य चान्तरं प्रायो महावधिः अतस्तत्र नेम्यां यत्र लग्नं दृश्यते तत् स्थानमप्यङ्कम्। अथ भग्रहाङ्कयोर्मध्ये येऽंशास्तैर्भध्रुवो युतः स्फुटग्रहो भवति यदा ग्रहात् पश्चिमस्थं नक्षत्रम्। यदा पूर्व्वस्थं नक्षत्रं तदा भध्रुवो हीनः स्फुटग्रहो भवति। अथवाल्पशरं नक्षत्रं रोहिण्याद्यं ततो दूरेऽन्तरे यदा ग्रहस्तदा तावत् विद्ध्वा प्रोक्तवद्ग्रहज्ञानम्। इति चक्रयन्त्रम्॥ शरीरस्थषट्चक्राणि यथा। मूलाधारः १ स्वाधिष्ठानम् २ मणिपूरम् ३ अनाहतम् ४ विशुद्धम् ५ आज्ञाख्यम् ६। तद्यथा,—

"मूलाधारे त्रिकोणाख्ये इच्छाज्ञानक्रियात्मके।
मध्ये स्वयम्भुलिङ्गन्तु कोटिसूर्य्यसमप्रभम्॥
तदूर्द्ध्वे कामबीजन्तु कलाशान्तीन्दुनादकम्।
तदूर्द्ध्वे तु शिखाकारा कुण्डली ब्रह्मविग्रहा॥
तद्बाह्ये हेमवर्णाभं वसवर्णचतुर्दलम्।
द्रुतहेमसमप्रख्यं पद्मं तत्र विभावयेत्॥
तदूर्द्ध्वेऽग्निसमप्रख्यं षड्दलं हीरकप्रभम्।
वादिलान्तषड्वर्णेन युक्ताधिष्ठानसंज्ञकम्॥
मूलमाधारषट्कानां मूलाधारं ततो विदुः।
स्वशब्देन परं लिङ्गं स्वाधिष्ठानं ततो विदुः॥
तदूर्द्ध्वे नाभिदेशे तु मणिपूरं महाप्रभम्।
मेघाभं विद्युदाभञ्च बहुतेजोमयं ततः॥
मणिवद्भिन्नतत्पद्मं मणिपूरं तथोच्यते।
दशभिश्च दलैर्युक्तं डादिफान्ताक्षरान्वितम्॥
शिवेनाधिष्ठितं पद्मं विश्वालोकनकारणम्।
तदूर्द्ध्वेऽनाहतं पद्ममुद्यदादित्यसन्निभम्॥
कादिठान्ताक्षरैरर्कपत्रैश्च समधिष्ठितम्।
तन्मध्ये वाणलिङ्गन्तु सूर्य्यायुतसमप्रभम्॥
शब्दब्रह्ममयं शब्दोऽनाहतस्तत्र दृश्यते।
तेनाहताख्यं पद्मं तन्मुनिभिः परिकीर्त्तितम्॥
आनन्दसदनं तत्तु पुरुषाधिष्ठितं परम्।
तदूर्द्ध्वन्तु विशुद्धाख्यं दलषोड़शपङ्कजम्॥
स्वरैः षोड़शकैर्युक्तं धूम्रवर्णं महाप्रभम्।
विशुद्धिं तनुते यस्मात् जीवस्य हंसलोकनात्॥
विशुद्धं पद्ममाख्यातमाकाशाख्यं महाद्भुतम्।
आज्ञाचक्रं तदूर्द्ध्वे तु आत्मनाधिष्ठितं परम्॥
आज्ञासंक्रमणं तत्र गुरोराज्ञेति कीर्त्तितम्।
कैलासाख्यं तदूर्द्ध्वे तु बोधनीन्तु तदूर्द्ध्वतः॥
एवञ्च शिवचक्राणि प्रोक्तानि तव सुव्रत!॥"॥

मन्त्रोद्धारार्थषट्चक्राणि यथा। कुलाकुलचक्रम् १ राशिचक्रम् २ नक्षत्रचक्रम् ३ अकथहचक्रम् ४ अकड़मचक्रम् ५ ऋणिधनिचक्रम् ६। तद्यथा,—

"कुलाकुलस्य भेदं हि वक्ष्यामि मन्त्रिणामिह।
वाय्वग्निभूजलाकाशाः पञ्चाशल्लिपयः क्रमात्॥
पञ्चह्रस्वाः पञ्चदीर्घा बिन्द्वन्ताः सन्धिसम्भवाः।
कादयः पञ्चशः य र ल व श हान्ताः प्रकीर्त्तिताः॥

तथा च।

अ आ ए क च ट त प य षाः मारुताः।
इ ई ऐ ख छ ठ थ फ र क्षाः आग्नेयाः।
उ ऊ ओ ग ज ड द ब ल ाः पार्थिवाः।
ऋ ॠ औ घ झ ढ ध भ व सा वारुणाः।
ऌ ॡ अं ङ ञ ण न म श हाः नाभसाः॥
साधकस्याक्षरं पूर्व्वं मन्त्रस्यापि तदक्षरम्।
यद्येकभूतदैवत्यं जानीयात् सकुलं हि तत्॥
भौमस्य वारुणं मित्रमाग्नेयस्यापि मारुतम्।
मारुतं पार्थिवानाञ्च शत्रुराग्नेयमम्भसाम्॥
नाभसं सर्व्वमित्रं स्याद्विरुद्धं नैव शीलयेत्॥"

अथ राशिचक्रम्।

"रेखाद्वयं पूर्व्वपरागतं स्यात्
तन्मध्यतो याम्यकुबेरभेदात्।
एकैकमीशानिशाकरे तु
हुताशवाय्वोर्विलिखेत्ततोऽन्याम्॥
वेदाग्निवह्नियुगलश्रवणाक्षिसंख्यान्
पञ्चेषुवायुशरपञ्चचतुष्टयाणाम्।
मेषादितः प्रविलिखेत् सकलांस्तु वर्णान्
कन्यागतान् प्रविलिखेदथ शादिवर्णान्॥

तेन अ आ इ ई मेषः। उ ऊ ऋ वृषः। ॠ ऌ ॡ मिथुनम्। ए ऐ कर्कटः। ओ औ सिंहः। अं अः श ष स ह ळ क्ष: कन्या। कवर्गस्तुला। चवर्गो वृश्चिकः। टवर्गो धनुः। तवर्गो मकरः। पवर्गः कुम्भः। यवर्गो मीनः। स्वराशीनामनुकूलं मन्त्रं भजेत्।
राशीनां शुद्धता ग्रोक्ता भजेत् षष्ठं व्यतिं व्ययम्।
स्वराशीन्मन्त्रराश्यन्तं गणनीयं विचक्षणैः॥
यदा तु स्वराशेरज्ञानं तदा साधकानामाद्याक्षरसम्बन्धिनं राशिं गृहीत्वा गणयेत्॥ * ॥

अथ नक्षत्रचक्रम्।

"अ आ अश्विनी देवगणः। इ भरणी मानुषः। ई उ ऊ कृत्तिका राक्षसः। ऋ ॠ ऌ ॡ रोहिणी मानुषः। ए मृगशिरो देवः। ऐ आर्द्रा मानुषः। ओ औ पुनर्व्वसुर्देवः। क पुष्यो देवः। ख ग अश्लेषा राक्षसः। घ ङ मघा राक्षसः। च पूर्व्वफल्गुनी मानुषः। छ ज उत्तरफल्गुनी मानुषः। झ ञ हस्ता देवः। ट ठ चित्रा राक्षसः। ड स्वाती देवः। ढ ण विशाखा राक्षसः। त थ द अनुराधा देवः। ध ज्येष्ठा राक्षसः। न प फ मूला-राक्षसः। ब पूर्व्वाषाढ़ा मानुषः। भ उत्तराषाढ़ा मानुषः। म श्रवणा देवः। य र धनिष्ठा राक्षसः। ल शतभिषा राक्षसः। व श पूर्व्व-भाद्रपदा मानुषः। ष स ह उत्तरभाद्रपदा मानुषः। अं अः ळ क्ष रेवती देवः॥ तथा च।
"अश्विन्यादिक्रमेणैव विलिखेत्तारकाः पुनः।
वक्ष्यमाणविधानेन तन्मध्ये वर्णकान् लिखेत्॥
उत्तरादक्षिणाग्रान्तु रेखां कुर्य्याच्चतुर्दशीम्।
एषा रेखाः पश्चिमाग्राः कर्त्तव्या वीरवन्दिते!॥
अकारादिक्षकारान्तान् द्विचन्द्रवह्निवेदकान्।
भूमीन्दुनेत्रचन्द्रांश्च अर्द्धमात्रां स्वरौ प्रिये!॥
द्विभूनेत्रनेत्रयुग्मांश्चेन्दुनेत्राग्निचन्द्रकान्।
मघादिज्येष्ठपर्य्यन्तं द्वितीयं नवतारकम्॥
वह्निभूमीन्दुचन्द्रांश्च युग्मेन्दुनेत्रवह्निकान्।
वेदेन भेदिता वर्णा रेवत्यंशगताः क्रमात्॥
पूर्व्वात्तरात्रयञ्चैव भरण्यार्द्रा च रोहिणी।
इमानि मानुषाण्याहुर्नक्षत्राणि मनीषिणः॥
ज्येष्ठाशतभिषामूलाधनिष्ठाश्लेषकृत्तिकाः।
चित्रामघाविशाखाः स्युस्तारा राक्षसदैवताः॥
अश्विनी रेवती पुष्यः स्वाती हस्तः पुनर्व्वसुः।
अनुराधाम्मृगशिरःश्रवणा देवतारकाः॥
स्वजातौ परमा प्रीतिर्मध्यमा भिन्नजातिषु।
रक्षोमानुषयोर्नाशो वैरं दानवदेवयोः॥
जन्म सम्पद्विपत् क्षेमः प्रत्यरिः साधको वधः।
मित्रं परममित्रञ्च जन्मादीनि पुनः पुनः॥"
जन्मत्रिपञ्चसप्तानि वर्ज्जनीयानि नक्षत्राणि। स्वनक्षत्रादेव नक्षत्रं गणनीयम्। स्वनक्षत्राज्ञाने स्वनामाद्याक्षरसम्बन्धिनक्षत्राज्ज्ञेयम्॥ * ॥

अथाकथहचक्रम्।

"चतुरस्रं लिखेत् कोष्ठं चतुष्कोष्ठसमन्वितम्।
पुनश्चतुष्कं तत्रापि लिखेद्धीमान् क्रमेण तु॥
इन्द्वग्निरुद्रनवनेत्रयुगाङ्कदिक्षु
ऋत्वष्टषोड़शचतुर्द्दशभौतिकेषु।
पातालपञ्चदशवह्निहिमांशुकोष्ठे
वर्णान् लिखेत् लिपिभवान् क्रमशस्तु धीमान्॥
नामाद्यक्षरमारभ्य यावन्मन्त्रादिमाक्षरम्।
चतुर्भिः कोष्ठैरेकैकमिति कोष्ठचतुष्टयम्॥
पुनः कोष्ठककोष्ठेषु सव्यतो नाम आदितः।
सिद्धः साध्यः सुसिद्धोऽरिः क्रमात् ज्ञेया मनीषिभिः॥
सिद्धः सिध्यति कालेन साध्यस्तु जपहोमतः।
सुसिद्धो ग्रहमात्रेण रिपुर्मूलं निकृन्तति॥"*॥

अथाकडमचक्रम्।

"रेखाद्वयं पूर्व्वपरेण कुर्य्यात्
तन्मध्यतो याम्यकुवेरभेदात्।
महेश्वरश्चोऽग्निपतिक्रमेण
तिर्य्यक् तथा वायुहुताशनेन॥
आकारादिक्षकारान्तान् क्लीवहीनान् लिखे-
त्ततः।
तथा ऋ ॠ वर्णद्वयं ऌ ॡ तत्र क्लीवं प्रचक्षते॥
एकैकक्रमतो लेख्यान् मेषादिषु दृषान्तकान्।
गणयेत् क्रमशो भद्रे नामादिवर्णकादिमान्॥
मेषादितश्च मीनान्तं गणयेत् क्रमशः सुधीः।
जपुः स्वनामतो मन्त्रो यावन्मन्त्रादिमाक्षरम्॥
सिद्धसाध्यसुसिद्धारीन् पुनः सिद्धादयः पुनः।
नवैकपञ्चमे सिद्धः साध्यः षड्दशयुग्मके॥
सुसिद्धस्त्रिसप्तके रुद्रे वेदाष्टद्वादशे रिपुः।
एतत्ते कथितं देवि! अकडमादिकमुत्तमम्॥
ताराशुद्धिर्वैष्णवानां कोष्ठशुद्धिः शिवस्य च।
राशिशुद्धिर्व्विष्णुपुरे च गोपालेऽकडमः स्मृतः॥"

अथ ऋणिधनिचक्रम्।

"कोष्ठान्येकादशान्येव वेदेन पूरितानि च।
अकारादिक्षकारान्तं लिखेत् कोष्ठेषु तत्त्ववित्॥
प्रथमं पञ्चकोष्ठेषु ह्रस्वदीर्घक्रमेण तु।
द्वयं द्वयं लिखेत्तत्र विचारे खलु साधकः॥
शेषेष्वेकैकशो वर्णान् क्रमशस्तु लिखेत् सुधीः॥
द्वौ द्वौ स्वरौ पञ्चसु कोष्ठकेषु
शेषान् स्वरान् षट्सु षडेकमेकम्।
कादीन् हशेषान् विलिखेत्ततोऽर्णा-
नेकैकमेकादशसु क्रमेण॥
षट्कालकालवियदग्निसमुद्रवेद-
खाकाशशून्यदहनाः खलु साध्यवर्णाः॥
युग्मादिपञ्चवियदम्बरयुक्शशाङ्क-
व्योमाश्विवेदशशिनः खलु साधकार्णाः॥
नामाद्यक्षरादष्टवाद्गणसङ्ख्यं
स्यात्तेभयोरधिकशेषकृतं धनं स्यात्॥
मन्त्रो यद्यधिकाङ्कः स्यात् तदा मन्त्रं जपेत् सुधीः।
समेऽपि च जपेन्मन्त्रं न जपेत् ऋणाधिके॥
शून्ये मृत्युं विजानीयात्तस्माच्छून्यं विवर्जयेत्॥"
इति तन्त्रसारः॥ * ॥
अथोत्तरायणचक्रं यथा,—
"चक्रं सारं विलिख्य ग्रहपतिरयने संक्रमं यत्र करोति
यस्मिन्नृक्षे तदृक्षं मरणभयकरं शूलमध्येऽपि-
दद्यात्।
तत् पञ्चाशारमूले विविधभयकरं शूलमार्गेषु-
लाभः
सत्त्वं स्यात् शूलमध्ये भवति च नियतं चित्त-
वामक्रमेण॥"
केतुचक्रं यथा,—
"कर्णे हृदि त्रिमुखे श्रुतुमागलाभौ
षट्पृष्ठमं चक्रारं धनदं करे च।
वामे चतुर्थे च करे पदयोस्तथाष्टौ
क्रोशो भयञ्च नितरामिह केतुचक्रम्॥"*॥
अग्निचक्रं यथा,—
"अथाग्निचक्रं वक्ष्यामि विभाजनवशाच्छ्योः।
ऊर्द्ध्वं रेखाष्टकं लेख्यं तिर्य्यक् च पञ्चरेखिकाः॥
स्यान्नद्वारसुखं चक्रमष्टाविंशतिकोष्ठकम्।
तत्र पौष्णाश्विवाम्यर्क्षकृत्तिकाग्नवभाग्यभम्॥
उत्तराफल्गुनी लेख्या पूर्व्वपङ्क्तौ भसप्तकम्।
अहिर्ब्बुध्नोऽजपादर्क्षं शतभं वासवर्क्षभम्॥
पुष्यं हस्तं समालेख्यं द्वितीयापङ्क्तिमाश्रितम्।
अभिजिद्विश्ववस्त्वर्क्षं सौम्यं रौद्रं पुनर्व्वसुम्॥
चित्रभञ्च तृतीयायां पङ्क्तौ विन्यस्य सप्तकम्।
विष्णुर्क्षं तोयभं मूलं ज्येष्ठामैन्द्रविशाखभम्॥
स्वातीं पङ्क्तौ चतुर्थ्यान्तु कर्त्तव्यं मनगाहतिः।
द्वारशाखे मघा याम्ये द्वारस्था कृत्तिका ततः॥
अश्लेषपूर्व्वाषाढ़ादित्रिकपञ्चचतुष्टयम्।
रेवती पूर्व्वभाद्रन्तीभानि शेषाणि भास्करः॥
उदयादिगता नाड्यो भक्षाः षष्ट्यामयीक्षके।
दिनेन्द्रभुक्तयुक्तोऽसौ भवेत्तत्कालचन्द्रमाः॥
चन्द्रवत्साधयेत् सूर्य्यञ्चक्रस्थरेखाविकम्।
चन्द्र ऋक्षे यदार्कोन्दू तदास्ति निखिलं निधिः॥
भानु ऋक्षे स्थितौ तौ चेत्तदा शल्यं न संशयः।
सप्तमे वितयं ज्ञेयं नास्ति किञ्चिद्विपर्य्यये॥
स्थितं न लभ्यते द्रव्यं चन्द्रे क्रूरग्रहान्विते।
एते चन्द्रे भवेच्छुद्धा चौरे चन्द्रेऽस्तगो निधिः॥
हेमतारञ्च ताम्रारं रत्नं कांस्यं तथा त्रपु।
नागं चन्द्रे विजानीयाद्भास्करादिग्रहे स्थिते॥
मिश्रैर्मिश्रं भवेत्तद्रव्यं शून्यं दृष्टिविवर्जिते॥
हेमतारञ्च ताम्रारं पाषाणं लवणायसम्।
सूर्य्यादिग्रहगे चन्द्रे द्रव्यभाण्डं प्रजायते॥
भुक्तराश्यंशमानेन भूमानं परिकल्पयेत्।
नीचे छिद्रं परे नीचे जलसंस्थो भवेन्निधिः॥
स्वोच्चस्थे तुङ्गगं द्रव्यं नवांशकक्रमेण च।
परमोच्चे भवेत्तुङ्गे भित्तिस्थञ्चरसंक्रमे।
अधिष्ठितं भवेद्द्रव्यं यत्र चन्द्रो ग्रहान्वितः॥"*॥
कुलाकुलचक्रं यथा,—
"द्वितीया दशमी षष्ठी कुलाकुलमुदाहृतम्।
विषमाश्चाकुलाः सर्व्वाः शेषाश्च तिथयः कुलाः॥
रविश्चन्द्रो गुरुः सौरिश्चत्वारोऽप्यकुला मताः।
भौमशुक्रौ कुलाख्यौ च बुधवारः कुलाकुलः॥
वरुणार्द्राभिजिन्मूलं कुलाकुलमुदाहृतम्।
कुलानि समधिष्ण्यानि शेषभान्यकुलानि च॥
तिथौ वारे च नक्षत्रे अकुले यायिनो जयः।

सतश्चोलमेव कर्म्म इति कर्म्मधारयः ।) चूडा-
कर्म्म । इति स्मृतिः ॥

चौलुक्यः, पुं, ( चुलकस्य गोत्रापत्यमिति । “गर्गा-
दिभ्यो यञ् ।” ४ । १ । १०५ । इति यञ् । )
राजर्षिभेदः । इति हेमचन्द्रः । ३ । ३१२ ॥

च्यु, क हासे । सहने । इति कविकल्पद्रुमः ॥
(चुरां-परं-अकं-सकञ्च-सेट् । ) अन्तःस्थाद्यो-
पधः । क, च्यावयति । इति दुर्गादासः ॥

च्यु, ङ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-
सकं-अनिट् । ) अन्तःस्थाद्योपधः । ङ, च्यवते ।
इति दुर्गादासः ॥

च्युत्, इर् क्षरणे । इति कविकल्पद्रुमः ॥ ( भ्वां-
परं-सकं-सेट् । क्वचित् अकञ्च ।) अन्तःस्थादि-
युक्तः । इर्, अच्युतत् अच्योतीत् । क्षर इह
आसेचनम् । च्योतति घृतं वह्नौ यज्वा । आश्चिच
सौत्रधे । इति दुर्गादासः ॥ (यथाच, भट्टिः ।
६ । २८ ।
“सीतां जिघांस सौमित्रे ! राघवावारतीं भुवम् ।
इदं शोणितमश्च्योतं सम्प्रहारेऽच्युतत्तयोः ॥”
“अच्युतत् गलितमकर्म्मकोऽयम् ।” इति तट्टीकायां
जयमङ्गलभरतौ ॥”)

च्युतं, त्रि, ( च्यवते स्म इति । च्यु+कर्म्मणि क्तः ।
यद्वा च्युत्+चञर्थे कः ।) क्षरितम् । यथा,—
“पिबन्तं त्वन्मुखाम्भोजच्युतं हरिकथामृतम् ॥”
इति श्रीभागवतम् ॥
( स्खलितम् । यथा, रघुः । ११ । २५ ।
“सञ्जमोऽभवदपोढकर्म्मणां
ऋत्विजां च्युतविकङ्कतस्रुचाम् ॥” )

च्युतिः, स्त्री, ( च्यवते शोणितादिकमस्या इति ।
च्यु+अपादाने क्तिन् ।) भगम् । इति हेमचन्द्रः ।
३ । ६०६ ॥ गुदद्वारम् । इति शब्दरत्नावली ॥
( च्यु+भावे क्तिन् । ) क्षरणम् । यथा,—
“कुर्य्यां हरस्यापि पिनाकपाणे-
र्धैर्य्यच्युतिं के मम धन्विनोऽन्ये ॥”
इति कुमारसम्भवे । ३ । १० ॥

च्युपः, पुं, (च्यवन्ते भावा अनेन इति । च्यु+“च्युवः
किच्च ।” उणां । ३ । २४ । इति पः स च कित्
च्युधातुरत्र भावगार्थे वर्त्तते इत्युज्ज्वलदत्तः ।)
मुखम् । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

च्युस, क हासे । इति कविकल्पद्रुमः ॥ ( चुरां-
परं-अकं-सेट् । ) क्वचित् पुस्तके हासे । अन्तः-
स्थादियुक्तः । क, च्योसयति । इति दुर्गादासः ॥

च्योत्नं, क्ली, ( च्युत्+पृषोदरादित्वात् साधुः ।)
च्योतम् । घृतादिक्षरणम् । इत्यमरटीका ॥

च्यौत्नः, त्रि, ( च्यवते इति । “जनिदाच्युवि ।”
उणां । ४ । १०४ । इति त्नप् । ) गमनकर्त्ता ।
बलवान् । चीरणपुरुषः । इति सिद्धान्तकौमुद्या-
मुणादिवृत्तिः ॥ बलम् । इत्युज्ज्वलदत्तः ॥)

---

छ

छ, छकारः । स तु व्यञ्जनसप्तमवर्णः । चवर्गद्वितीय-
वर्णश्च । (वर्णाचरैः) तस्य लेखनप्रकारो यथा,
“ऊर्द्धादधोगता रेखा कुञ्चिता कुण्डली ततः ।
पुनश्चाधोगता तासु सन्ति ब्रह्मेशविष्णवः ॥”
इति वर्णोद्धारतन्त्रम् ॥ * ॥
अस्योच्चारणस्थानं तालु । इति व्याकरणम् ॥
(“इचुयशानान्तालु ।” इति सूत्रकारेणोक्तम् ।
“कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू ॥”
इति शिक्षायाञ्च ॥ )
अस्योत्पत्तिर्यथा । प्रपञ्चसारे ।
“विसर्गस्तानुगः शोष्मा षं चवर्गश्च यन्तया ।”
अत्रोत्तरत्रापि वर्गस्य द्वितीयादिवर्णोच्चारणे
खरस्पर्शनादिति लोकगम्भीरसंस्पर्शादिति च
यथास्थानमन्वेतीति तट्टीकाकारो विश्वरूपः ॥
अस्या ध्यानं यथा, वर्णोद्धारतन्त्रे ।
“ध्यानमस्याः प्रवक्ष्यामि द्विभुजान्तु त्रिलोचनाम् ।
पीताम्बरधरां नित्यां वरदां भक्तवत्सलाम् ।
एवं ध्यात्वा छकारन्तु तन्मन्त्रं दशधा जपेत् ॥”
अस्य स्वरूपं यथा, कामधेनुतन्त्रे ।
“छकारं परमाश्चर्य्यं स्वयं परमकुण्डली ।
सततं कुण्डलीयुक्तं पञ्चदेवमयं सदा ॥
पञ्चप्राणमयं वर्णं पञ्चप्राणात्मकं सदा ।
त्रिबिन्दुसहितं वर्णं सदा ईश्वरसंयुतम् ॥
पीतविद्युल्लताकारं छकारं प्रणमाम्यहम् ॥”
तस्य नामानि यथा, तन्त्रशास्त्रे ।
“छश्छन्दनं सुषुम्णा च पशुः पशुपतिर्म्मृतिः ।
निर्म्मलं तरलं वह्निर्भूतमाता विलासिनी ॥
एकनेत्रश्च वृषणो द्विशिरा वामकूर्परः ।
गोकर्णो लाङ्गली वामकामसत्ता सदाशिवः ॥
माता निशाचरः पायुर्धिष्ठतः स्थितिशब्दकः ॥”

छं, त्रि, ( छायते परिष्क्रियते यत् इति । छो+
कर्म्मणि घञर्थे कः ।) निर्म्मलम् । इति मेदिनी ।
छे, १ ॥ तरलम् । इत्येकाक्षरकोषः ॥

छः, पुं, (छो+भावे डः घञर्थे को वा ।) छेदनम् ।
इत्येकाक्षरकोषः ॥

छगः, पुं स्त्री, ( छं यज्ञादौ छेदनं गच्छति प्राप्नो-
तीति । गम+डः ।) छागः । इति हेमचन्द्रः ।
४ । १२७५ ॥

छगणं, क्ली पुं, ( छद+डः । छः तस्मै अपे-
श्छादनायेत्यर्थः गण्यते इति । गण+कर्म्मणि
अप् । ) करीषः । इति हेमचन्द्रः ।४।१२।७३ ॥

छगलं, क्ली, ( छ्यति छिनत्ति छायते वा । छो+
छेदने+“छो गुग् ह्रस्वश्च ।” उणां । १।११३ ।
इति कलच् प्रत्ययः धातोर्गुगागमो ह्रस्वश्च । )
नीलवस्त्रम् । इति मेदिनी । ले, १ ॥

छगलः, पुं स्त्री, ( छायते छिद्यते देवोपहाराय
इति । छो+कलच् गुगागमो ह्रस्वश्च ।) छागः ।
इति मेदिनी । ले, ६१ ॥ ( यथा, सुश्रुते ।१।४६।
“नाति शीतो गुरुः स्निग्धो मन्दपित्तकफः स्मृतः ।
छगलस्त्वनभिष्यन्दी तेषां पीनसनाशनः ॥”)

छगलकः, पुं स्त्री, ( छगल+स्वार्थे कन् ।) छागः ।
इत्यमरः । २ । ६ । ७६ ॥

छगला, स्त्री, ( छगलस्तदाकारोऽस्त्यस्य छगलवत्
त्वक् विद्यतेऽस्येति वा । “अर्शआदिभ्योऽच् ।”
५ । २ । १२७ । इति अच् टाप् च ।) वृद्ध-
दारकवृक्षः । इति शब्दरत्नावली मेदिनी च ॥
( व्यवहारोऽस्या यथा, “पुष्पपुष्पिकालक्ष्मणी-
जीवन्तीविम्बीतिकानन्दीभल्लातकच्छगलान्त्री-
वृश्चादनीफञ्जीशाल्मलीशेलुवनस्पतिप्रसवशाक-
वृन्दारकोविदारप्रभृतीनि ।” इति सुश्रुते सूत्र-
स्थाने ४६ अध्याये ॥ )

छगलाङ्घ्री, स्त्री, ( छगलवदङ्घ्रिर्मूलमस्याः । ततो
ङीष् । ) छगलान्त्री । इत्यमरटीकायां रमा-
नाथः ॥

छगलाण्डी, स्त्री, ( छगलवदण्डं अन्नं यस्याः । )
छगलान्त्री । इत्यमरटीकायां रायमुकुटः ॥
(पुंसि तु पीठस्थानभेदे । यथा, देवीभागवते ।
७ । ३० । ७३ ।
“छगलण्डे प्रचण्डा तु चण्डिकाऽमरकण्टके ॥” )

छगलान्त्रिका, स्त्री, (छगलान्त्री+स्वार्थे कन् । टापि
पूर्व्वह्रस्वः ।) छगलान्त्री । इति शब्दरत्नावली ॥

छगलान्त्री, स्त्री, (छगलवदन्त्रं यस्याः ।) वृद्धदारक-
वृक्षः । इत्यमरः । २ । ४ । १६७ ॥ वृकः । इति
राजनिर्घण्टः ॥ (यथा, सुश्रुते सूत्रस्थाने । ३८
अध्याये ।“श्यामामहाश्यामात्रिवृद्दन्तीशङ्खिनी-
तिल्वककम्पिल्लकरम्यकक्रमुकपुत्रश्रेणीगवाक्षी-
राजवृक्षकरञ्जद्वयगुडूचीसप्तलाच्छगलान्त्री-
सुधाः सुवर्णक्षीरी चेति ॥” )

छगली, स्त्री, ( छगल+जातित्वात् ङीष् ।) छाग-
माता । वृद्धदारकवृक्षः । इति विश्वः ॥

छटा, स्त्री, ( छो+अटन् किच्च ।) दीप्तिः । (यथा,
राजतरङ्गिण्याम् । ४ । १२८ ।
“प्रतापांशुच्छटाकूटैः पटवासमधर्म्मभिः ।
जम्बुद्वीपद्विजेन्द्रस्य येनातन्यत मण्डनम् ॥”)
समूहः । यथा, माघे । १ । ४७ ॥
“सटाच्छटाभिन्नघनेन बिभ्रता
नृसिंहसैंहीमतनुं तनुं त्वया ।”
(सटाच्छटाभिः केशरसमूहैः ।” इति मल्लिनाथः ॥)

छटाफलः, पुं, (छटा इव परस्परसंस्पृष्टानि फलानि
यस्य ।) गुवाकवृक्षः । इति त्रिकाण्डशेषः ॥
(पूगशब्देऽस्य विवृतिर्ज्ञेया ॥)

छटाभा, स्त्री, (छटाभिर्दीप्तिभिर्भाति इति । भा+
क्विप् । यद्वा । भा+कः । टाप् च ।) विद्युत् ।
इति हारावली । ५८ ॥

छ(च)त्रं, क्ली, ( छादयत्यनेनातपादिकमिति । छद
+णिच्+“सर्व्वधातुभ्यः ष्ट्रन् ।” उणां । ४ ।
१५८ । इति ष्ट्रन् णिलोपः ह्रस्वश्च ।) रौद्रवृष्टि-
निवारणार्थावरणविशेषः । छाति इति भाषा ॥
तत्पर्य्यायः । आतपत्रम् २ । इत्यमरः ।२।८।३२॥
छायामित्रम् ३ पटोटजम् ४ । इति शब्दरत्ना-
वली ॥ आतपवारणम् ५ । राजच्छत्रं यथा,—
“आतपत्रञ्च राज्ञस्तु शृणुष्व त्रिदश तत् ।

पुण्डरीकमथो भद्रासनं राजासनं तु यत् ॥"

इति जटाधरः ॥

अपि च शब्दरत्नावल्याम् ।
"छत्रे कनकदण्डे तु राजच्छत्रमुदाहृतम् ।
नृपलक्ष्म भवेत्तत्तु यच्छत्रं पृथिवीभुजाम् ॥"
तस्य गुणाः । वृष्ट्यातपधूलिवायुहिमनाशित्वम् । वर्ण्यदृष्टिकारित्वम् । शुभ्रातपत्रमङ्गलकारित्वञ्च । इति राजवल्लभः ॥ * ॥ तस्योत्पत्ति-र्यथा । एकदा ज्यैष्ठमासे जमदग्निमुनिर्धनुषि बाणान् सन्धाय सन्धाय प्रक्षिपेत् तत्पत्नी रेणुका तान् बाणानानीयानीय तस्मै प्रादात् । सा मध्याह्नकाले रौद्रेण पीडिता वृक्षच्छाया-मवलम्ब्य किञ्चित् कालं स्थित्वा तानानिनाय । कथितस्तदा क्रुद्धस्तामाह किं चिरेणागता । सा आह सूर्य्यतेजसा मे शिरः पादौ च सन्तप्तौ तेन वृक्षच्छायामाश्रित्य स्थिता तस्मात् चिरायै-तत् जातम् । तच्छ्रुत्वा मुनिराह अद्य सूर्य्यमस्त्रा-ग्नितेजसा निपातयिष्यामीत्युक्त्वा धनुषि बाणान् सन्धाय सूर्य्याभिमुखोऽतिष्ठत् । सूर्य्यस्तं दृष्ट्वा भीतो द्विजरूपेण आगत्य आह सूर्य्यादस्मादि भवति तेनान्नेन भवद्भिः कर्म्माणि क्रियन्ते कथ-मेनं हनिष्यसि एवं साकाशीत्यथापि मुनिः शमं न जगाम । अथ सूर्य्यः शिरस्त्राणं छत्रं निर्म्माय तस्मै दत्त्वा अद्यप्रभृति एतत् लोके प्रचरिष्यति व्रतादिषु च अस्य दानं महाफलं स्यादित्युक्त्वा गतः ॥ * ॥ तस्य दानफलं यथा,—
"छत्रं हि भरतश्रेष्ठ ! यः प्रदद्यात् द्विजातये ।
शुभ्रं शतशलाकं वै स प्रेत्य सुखमेधते ॥
स शक्रलोके वसति पूज्यमानो द्विजातिभिः ।
अप्सरोभिश्च सततं देवैश्च भरतर्षभ ! ॥"

इति महाभारते राजधर्म्मः ॥

अथ छत्रयुक्तिः ।
"विशेषश्चाथ सामान्यं छत्रस्य द्विविधा भिदा ।
राजच्छत्रं विशेषाख्यं सामान्यञ्चान्यदुच्यते ॥
तत्र विशेषच्छत्रोद्देशः ।
सदण्डञ्चाथ निर्द्दण्डं तच्चोद्देयं द्विविधं पुनः ।
सदण्डं तत्र विज्ञेयं वारणाञ्चनात्मकम् ॥
दण्डः कन्दः शलाकाश्च रज्जुर्वस्त्रञ्च कीलकः ।
षड्भिरेतैः सुसम्बद्धैश्छत्रमित्यभिधीयते ॥
दिगष्टषट्चतुर्हस्तदीर्घो दण्डो युगक्रमात् ।
षड्वाणवेदनयनवितस्त्या कन्द उच्यते ॥
शतान्यशीतिः षष्टिश्च चत्वारिंशद्युगक्रमात् ।
शलाकाः षट्पञ्चवेदत्रिहस्तैः सम्मिताः क्रमात् ॥
नवभिस्तन्तुभिः सूत्रं सूत्रैस्तु नवभिर्गुणः ।
गुणैस्तु नवभिः पाशो रश्मिस्तैर्नवभिर्भवेत् ॥
नवाष्टसप्तषट्संख्यै रश्मिभी रज्जवः क्रमात् ।
वस्त्रं शलाकाद्विगुणमायामेन प्रतिष्ठितम् ॥
भानुदिग्नन्दवसुभिरङ्गुलीभिस्तु कीलकः ।
कार्य्यो वज्रासनस्थितं सदाशामेव भूतये ॥
पादोनं युवराजस्य अन्येषान्तु तदर्द्धतः ॥
एतेन राज्ञो दण्डो द्विहस्तः युवराजस्य तत्
अन्येषामपि तद्वेव ।

विशुद्धकाष्ठस्य तु दण्डकन्दौ
तथा शलाका अपि शुद्धवंशजाः ।
रज्जुश्च रक्ता वसनञ्च रक्तं
छत्रप्रसादे नृपतेर्भवन्ति ॥
प्रथादसिति प्रथादार्थम् ।
नीलो दण्डश्च वस्त्रश्च शिरःकुम्भस्तु काञ्चनः ।
सौवर्णं युवराजस्य प्रतापं नाम विश्रुतम् ॥
चाम्पेयौ दण्डकन्दौ चेत् मुक्ता रज्जुबालकौ ।
छत्रं मनोहरं राज्ञां सर्व्वकुम्भोपशोभितम् ॥
मुक्तानि रज्जुजालानि सर्व्वकुम्भस्तयोपरि ।
इदं कनकदण्डाख्यं छत्रं सर्व्वार्थसाधकम् ॥
दण्डकन्दशलाकाश्च शुद्धस्वर्णेन निर्म्मिताः ।
कीलकं स्वर्णघटितमनुक्तो रज्जुबालकौ ॥
कुम्भादिरथ हंसादिश्चामरादिर्यथाक्रमम् ।
कुम्भादावथ हंसादौ नवरत्नानि रचयेत् ॥
द्वात्रिंशन्मौक्तिकी माला द्वात्रिंशत्तत्र दापयेत् ।
सर्व्वोपरि अब्जजातिं विशुद्धं हीरकं न्यसेत् ॥
दण्डान्ते कुरुविन्दांश्च पद्मरागांश्च विन्यसेत् ।
सामिशलोकमानेन चामरः सित इष्यते ॥
इत्ययं नवदण्डाख्यश्छत्रराजो महीभुजाम् ।
अभिषेके विवाहे च प्रजानां प्रीतिवर्द्धनः ॥
पताका नवदण्डाग्रे राज्ञोऽष्टाङ्गुलिसंमिताः ।
अयं दिग्विजयी नाम छत्रराजो महीभुजाम् ॥"

इति भोजराजकृतयुक्तिकल्पतरुः ॥

छत्रः, पुं, ( छद+णिच्+ष्ट्रन् ह्रस्वश्च ।) मूलेन पत्रेण च छत्राकारत्वात् । छातारियाविष । छातनाविष । खरविष इति च भाषा । तत्-पर्य्यायः । अतिच्छत्रः २ कटुः ३ । इति रत्न-माला ॥ भूतृणम् । इति राजनिर्घण्टः ॥

छत्रकः, पुं, (छत्रमिव कायति इति । कै+कः ।) मत्स्यरङ्गपक्षी । इति शब्दचन्द्रिका ॥ अति-च्छत्रः । राङ्गा कुलेखाड़ा इति भाषा ॥ इति रत्नमाला ॥ ईश्वरगृहविशेषः । इति शब्द-रत्नावली ॥

छत्रगुच्छः, पुं, ( छत्रमिव गुच्छो यस्य । ) गुच्छ-तृणम् । इति राजनिर्घण्टः ॥

छत्रचक्रं, क्ली, (छत्राकृति चक्रम् ।) चक्रविशेषः । यथा, समयामृते छत्रचक्रम् ।
"अश्विनीमघमूलाद्यं चक्रं छत्रत्रयात्मकम् ।
प्रतीचीमध्यरेखाया ईशानान्तं हयाधिपः ॥
आग्नेयान्तं नराधीशो नैरृतान्तं गजाधिपः ।
एषां छत्रविभागेन ज्ञातव्यञ्च शुभाशुभम् ॥
अन्यस्य राज्ञो नामर्क्षं यत्र छत्रे ततः फलम् ।
चामरं कलसं वीणा शूलं दण्डः पतद्ग्रहः ॥
आसनं कीलकं रज्जुरेव भेदाः प्रकीर्त्तिताः ।
यत्र छत्रे स्थितः सौरिर्भङ्गं तस्य विनिर्द्दिशेत् ॥
चामरे चञ्चला वायोरनावृष्टिः प्रजायते ।
दुर्भिक्षञ्च भवेत् घोरं प्रजापीड़ा न संशयः ॥
कलसस्थे भवेद्युद्धं भङ्गो मातादिकं ध्रुवम् ।
वीणास्थेनार्कपुत्रेण पट्टराज्ञी विनश्यति ॥
चलचित्तो भवेद्राजा भयभीता च मेदिनी ।
यदा कालग्रहे सौरिस्थिते दण्डे पतद्ग्रहे ॥
तदा तस्य भवेन्मृत्युर्ब्रह्मलोकस्य न संशयः ।
आसनस्थे भवेन्नाश आसनस्थे शनैश्चरे ॥
युवराजक्षयः कीले बन्धनं रज्जुसंस्थिते ।
सौम्ययुक्तोऽतिचारस्थः शनिवक्रफलो न हि ॥
वक्रगः क्रूरयुक्तश्च सर्व्वं क्रूरं करोति सः ।
शनिराहुकुजादित्या यदा जीवेन्दुसंयुताः ॥
उत्तराधीशराज्ञो वै निश्चितं छत्रभङ्गदाः ।
क्रूरं चतुष्टयञ्चैव बुधचन्द्रेण संयुतम् ॥
पूर्व्वच्छत्रविनाशाय तथा पापचतुष्टयम् ।
शुक्रेन्दुसंयुतं छत्रे दक्षिणे शस्त्रभङ्गदम् ॥
एवमन्येषु राज्येषु नामर्क्षात् फलमादिशेत् ।
यथा दुष्टफलः सौरिस्तथा सौम्यफलो गुरुः ॥
भौमज्ञौ गुरुराहू च रविचन्द्रौ बुधो समौ ।
यथा हानिकराः क्रूरास्तथा सौम्याः शुभङ्कराः ॥
एतेऽष्टौ ग्रहाश्चैवं परचक्रेण भङ्गदाः ।
नृपनामर्क्षगो राहुः केतुर्व्वा यत्र संस्थितः ॥
छत्रभङ्गो भवेत्तस्य विग्रहाणेन भूपतेः ।
जनयाबाहनं यात्रा दुष्टबन्धनवाहनम् ॥
विग्रहश्च ततोऽजाना छत्रस्थे क्रूरखेचरे ।
ज्ञात्वैवं शान्तिकं कुर्य्यात् प्रजानां जायते

शुभम् ॥"

छत्रधारः, त्रि, ( छत्रं धरतीति । धृ+"कर्म्म-ण्यण् ।" ३ । २ । १ । इत्यण् ।) छत्रधरः । छातिधरा इति भाषा ॥ तत्पर्य्यायः । छाया-करः २ । इति हेमचन्द्रः । ३ । ४२८ ॥ ( यथा, पञ्चतन्त्रे । ३ । ६७ । "सपत्नी च यथा, जननी देवी कञ्चुकी मालिकः शय्यापालकः अध्या-ध्यक्षः सांवत्सरिकः भिषक् जलवाहकः ताम्बूल-वाहकः आचार्य्यः अङ्गरक्षकः स्थानचिन्तकः छत्रधारः विलासिनी च ॥")

छत्रपत्रं, क्ली, (छत्रमिव पत्रमस्य । ) स्थलपद्मम् । इति त्रिकाण्डशेषः ॥

छत्रपत्रः, पुं, ( छत्रमिव विस्तृतं पत्रमस्य । ) भूर्जवृक्षः । इति रत्नमाला ॥ (भूर्जशब्दे विवृति-रस्य ज्ञातव्या ॥ ) मानकचुः । इति केचित् ॥ सप्तपर्णवृक्षः । इति च केचित् ॥

छत्रभङ्गः, पुं, ( छत्रस्येव रक्षितुः स्वामिन इत्यर्थः भङ्गो यत्र ।) वैधव्यम् । स्वातन्त्र्यम् । नृपनाशः । इति मेदिनी । गे, ५६ ॥

छत्रा, स्त्री, ( छत्रमिव आकृतिर्विद्यतेऽस्याः । अर्श आदित्वादच् ततष्टाप् । यद्वा, छदति आच्छादयति स्रोतपथिस्थानमिति । छद+"सर्व्वधातुभ्यः ष्ट्रन् ।" उणां । ४ । १५८ । इति ष्ट्रन् । ततः स्त्रीत्वविवक्षायां ङीषोऽनित्यत्वात् टाप् ।) मिशिः । मौरी इति भाषा ॥ कुस्तुम्बुरु । धन्या इति भाषा ॥ ( यथा,—
"सुस्तपर्पटकोदीच्यछत्राख्योशीरचन्दनैः ।
शृतं शीतं जलं दद्यात् तृड्दाहज्वरशान्तये ॥
छत्रा धान्याकम् ॥" इति भावप्रकाशः ॥)
शिलीन्ध्रम् । इति मेदिनी । रे,३८॥ कोँड़कछाता इति भाषा ॥ मञ्जिष्ठा । इति राजनिर्घण्टः ॥ (निघण्टुसन्तापान्तर्गतरसायनौषधिविशेषः । तस्य

लक्षणं यथा, सुश्रुते चिकित्सितस्थाने ३० अः ।
"छत्रातिच्छत्रकेव वाराहीकन्दसम्भवा ।
एकपत्रा महावीर्या भिन्नाञ्जनसमप्रभा ॥
छत्रातिच्छत्रके विद्यात् रक्षोघ्ने कन्दसम्भवे ॥")

छत्राकं, क्ली, ( छत्रा इव कायतीति । कै + कः ।) किम्पाकुः । छत्रिका । इति प्रायश्चित्तविवेकः ॥ ( यथा, मनुः । ५ । १९ ।
"छत्राकं विड्वराहञ्च लशुनं ग्रामकुक्कुटम् ।
पलाण्डुं गृञ्जनञ्चैव मत्या जग्ध्वा पतेद्द्विजः ॥")

छत्राकः, पुं, ( छत्रमिव अकति आच्छादकत्वं गच्छतीति । छत्र + अक + अच् । ) जलवब्बूरवृक्षः । इति राजनिर्घण्टः ॥

छत्राकी, स्त्री, ( छत्राक + गौरादित्वात् ङीष् । ) रास्ना । इत्यमरः । २ । ४ । ११५ ॥

छत्रातिच्छत्रः, पुं, (छत्रमतिक्रम्य छदति आच्छादयतीति । अति + छद + क्विप् ।) छत्राकारजलोद्भवसुगन्धाख्यतृणविशेषः । तत्पर्य्यायः । छत्रातिच्छत्रा २ पालघ्नः ३ अतिच्छत्रा ४ सुगन्धा ५ छत्रकः ६ कटुकः ७ कटुः ८ । इति शब्दरत्नावली ॥

छत्राधान्यं, क्ली, ( छत्रा धान्यमिव । ) धन्याकम् । इति राजनिर्घण्टः ॥

छत्रिका, स्त्री, ( छत्रा एव । छत्रा + स्वार्थे कन् । अत इत्वञ्च ।) शिलीन्ध्रम् । कोँड़कछाता इति भाषा ॥ तत्पर्य्यायः । गोमयच्छत्रिका २ शिलीन्ध्रम् ३ शिलीन्ध्रकम् ४ उच्छिलीन्ध्रम् ५ वसारोहम् ६ गोलावम् ७ । इति हारावली ॥ छत्राकम् ८ । इति स्मृतिः ॥ उच्छिलीन्ध्रम् ९ । इति श्रीभागवतम् ॥ करीषभूमतालकपृथ्वीवेणुजच्छत्रिकायाः सामान्यगुणाः । शीतलत्वम् । कषायत्वम् । स्वादुत्वम् । पिच्छिलत्वम् । गुरुत्वम् । छर्द्यतीसारज्वरश्लेष्मरोगकारित्वञ्च ॥ पलालजच्छत्रिकागुणाः । पाके स्वादुरसत्वम् । रूक्षत्वम् । दोषकारित्वञ्च ॥ शुचिस्थानकाष्ठवंशगोष्ठजश्वेतच्छत्रिकाया गुणाः । अतिदोषकारित्वम् । अन्यच्छत्रिकाभ्यो विगर्हिता । इति राजवल्लभः ॥

छत्री, [ न् ] पुं, ( छत्रं कौशलादिभिराच्छादकत्वं विद्यतेऽस्य । छत्र + इनिः । ) नापितः । इति शब्दरत्नावली ॥ छत्रविशिष्टे, त्रि । यथा,—
"गच्छेद्वर्षातपे छत्री दण्डी रात्राटवीषु च ।"
इति स्मृतिः ॥
( यथा च हरिवंशे । २५३ । ५ ।
"मौञ्जी यज्ञोपवीती च छत्री दण्डाजिनी तथा ।
वामनो धूम्रकाषायी भगवान् बालरूपधृक् ॥")

छत्वरः, पुं, ( छदते अपवारयति वर्षोष्णादिकमिति । छद अपवारणे + "छित्वरच्छत्वरेति ।" उणां । ३ । १ । इति ष्वरच् प्रत्ययेन साधुः ।) गृहम् । कुञ्जः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

छद, त् क संवृतौ । इति कविकल्पद्रुमः ॥ (अदन्तचुरां-परं सकं-सेट् ।) छदयति । इति दुर्गादासः ॥ ( यथा, कविरहस्ये । १६ ।
"छदयति सुरलोकं यो गुणैर्यश्च शुद्धैः
सुरयुवतिविसृष्टाञ्छादयन्ति सखञ्च ॥")

छद, कि न संवृतौ । इति कविकल्पद्रुमः ॥ (चुरां-पक्षे भ्वां-उभं-सकं-सेट् । ) कि न, छादयति छादयते छदति छदते दिशं मेघः । आच्छादयति इत्यर्थः । इति दुर्गादासः ॥

छद, म कि न ऊर्ज्जने । ऊर्ज्जनं बलं जीवनञ्च । इति कविकल्पद्रुमः ॥ ( चुरां-पक्षे भ्वां-उभं-सकं-सेट् । ) छदयति पुत्रं पिता । जीवयति बलवन्तं करोति वा इत्यर्थः । इति दुर्गादासः ॥

छदः, पुं, ( छदति आच्छादयतीति । छद + अच् । ) पत्रम् । ( यथा, रामायणे । ३।५५।६ ।
"सतो मध्येऽधमभावाद् महान्तं हरितच्छदम् ॥")
पक्षः । ग्रन्थिपर्णवृक्षः । तमालवृक्षः । इति मेदिनी । दे, ५ ॥

छदनं, क्ली, ( छदति आच्छादयतीति । छद + ल्युः । ) पत्रम् । पक्षः । ( यथा, महाभारते । ३ । १५८ । ६९ ।
"विमलस्फाटिकाभानि पाण्डरच्छदनैर्द्विजैः ।
कलहंसैरुपेतानि सारसाभिरुतानि च ॥"
छद + भावे ल्युट् । ) पिधानम् । इति मेदिनी । ने, ६५ ॥ तमालपत्रम् । इति राजनिर्घण्टः ॥ तेजपात इति भाषा ॥

छदपत्रः, पुं, ( छदानि आच्छादकानि पत्राणि यस्य ।) भूर्जपत्रवृक्षः । इति कश्चित् रत्नमाला ॥

छदिः, [ स् ] क्ली, ( छादयतीति छाद्यतेऽनेन वा । छद + णिच् + "अर्चिशुचिहुसृपिछादिछर्द्दिभ्य इसिः ।" उणां । २ । १०९ । इति इसिः । "इस्मन्त्रन्क्विषु च ।" ६ । ४ । ९७ । इति ह्रस्वः । ) पटलम् । इत्यमरः । २ । २ । १४ ॥ ( यथा, भागवते । ७ । १४ । १३ ।
"क्रिमिविड्भस्मनिष्ठान्तं क्वेदं तुच्छं कलेवरम् ।
क्व तदीयरतिर्भार्य्या क्वायमात्मा नभश्छदिः ॥")

छद्म, [ न् ] क्ली, ( छदति आव्रियते स्वरूपमनेनेति । छद + "सर्व्वधातुभ्यो मनिन् ।" उणां । ४ । १४४ । इति मनिन् । ) व्याजः । ( यथा, रघुः । १२ । २
"तं कर्णमूलमागत्य रामे श्रीर्न्यस्यतामिति ।
कैकेयीशङ्कयेवाह पलितच्छद्मना जरा ॥" )
कपटः । व्याजम् । अपदेशः । स्वरूपाच्छादनम् । इति मेदिनी । ने, ६४ ॥

छद्मतापसः, पुं, ( छद्मना कपटेन तापसः । अप्रकृततपस्विया एवास्य तथात्वम् । ) छलतपस्वी । तत्पर्य्यायः । सर्व्वाभिसन्धी २ वैडालव्रतिकः ३ वेषधारी ४ । इति शब्दरत्नावली ॥

छद्मिका, स्त्री, ( छद्म अस्त्यस्याः । व्रीह्यादित्वादिनिः संज्ञायां कन् टाप् च ।) गुडूची । इति राजनिर्घण्टः ॥

छन्दः, पुं, ( छन्द्यते इति । छन्द + भावे घञ् । ) अभिप्रायः । ( यथा, रामायणे । २ । ६ । ७ ।
"मनोऽभिमानं यदि ते भोक्तुं छन्दो विलासिनि ।
श्रूयतामभिधास्यामि श्रुत्वा चैतद्विधीयताम् ॥")
वशः । इत्यमरः । ३ । ३ । ८८ ॥ अभिलाषः । इति भरतः ॥ विषम् । इति शब्दचन्द्रिका ॥ रहसि, त्रि । इत्यमरटीकासारसुन्दरी ॥

छन्दः, [ स् ] क्ली, ( चन्दयति आह्लादयति चन्द्यतेऽनेन वा । चदि आह्लादे + "चन्देरादेश्च छः ।" उणां । ४ । २१८ । इति असुन् धातोश्छश्च । ) वेदः । ( यथा, रघुः । १ । ११ ।
"आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव ॥")
स्वैराचारः । अभिलाषः । (यथा, महाभारते । १२ । २०१ । १२ ।
"कामात्मकाश्छन्दसि कर्म्मयोगा
एभिर्विमुक्तः परमश्नुवीत ॥" )
पद्यम् । इति मेदिनी । से, २२ ॥ अस्य लक्षणं यथाह गङ्गादासः ।
"पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा ।
वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेत् ॥
सममर्द्धसमं वृत्तं विषमञ्चेति तत्त्रिधा ।
समं समचतुष्पादं भवत्यर्द्धसमं पुनः ॥
आदिस्तृतीयवद्यस्य पादस्तुर्य्यो द्वितीयवत् ।
भिन्नचिह्नचतुष्पादं विषमं परिकीर्त्तितम् ॥"
तस्यार्थः । अक्षरसंख्यातं अक्षरगणनया परिमाणं वृत्तमुच्यते । मात्राकृता मात्रागणनया निर्णीता जातिर्जातिसंज्ञिका भवति । समं समचतुष्पादम् । अर्द्धसमं यस्य प्रथमः पादः तृतीयेन पादेन तुल्यः चतुर्थः पादो द्वितीयेन पादेन तुल्यः । विषमं पृथक्पृथक्चतुष्पादम् ॥ ( तच्च समवृत्तम् उक्थादिसंज्ञाभेदेन षड्विंशतिप्रकारकम् । यदुक्तं छन्दोमञ्जर्य्याम् ।
"आरभ्यैकाक्षरात् पादादेकैकाक्षरवर्द्धितैः ।
पादैरुक्थादिसंज्ञं स्याच्छन्दः षड्विंशतिं गतम् ॥
उक्थात्युक्था तथा मध्या प्रतिष्ठान्या सुपूर्विका ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥
त्रिष्टुप् च जगती चैव तथातिजगती मता ।
शक्वरी सातिपूर्वा स्यादष्ट्यत्यष्टी तथा स्मृते ॥
धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः ।
विकृतिः संकृतिश्चैव तथाभिकृतिरुत्कृतिः ॥"
छन्दोलक्षणोपयोगिगणास्तु इत्थं । यदुक्तं तत्रैव,
"म्यरस्तजभ्नगैर्लान्तैरेभिर्दशभिरक्षरैः ।
समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना ॥
मस्त्रिगुरुस्त्रिलघुश्च नकारो
भादिगुरुः पुनरादिलघुर्यः ।
जो गुरुमध्यगतो रलमध्यः
सोऽन्तगुरुः कथितोऽन्तलघुस्तः ॥
गुरुरेको गकारस्तु लकारो लघुरेककः ।
क्रमेण चैषां रेखाभिः संस्थानं दर्श्यते यथा ॥"
म ऽऽऽ, न ।।।, भ ऽ।।, य ।ऽऽ, ज ।ऽ।, र ऽ।ऽ, स ।।ऽ, त ऽऽ।, ग ऽ, ल ।)
छन्दस्तु नानाविधम् । तच्च पश्यताः छन्दोविचितिपिङ्गलच्छन्दोमञ्जरीवृत्तरत्नाकरश्रुतबोधादयः सन्ति तेषु छन्दोमञ्जर्य्याद्युक्तलक्षणोदाहरणादीनि लिख्यन्ते ॥

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|
| एकाक्षरा वृत्तिः । उक्था । | | |
| श्रीः | गश्री ऽ | श्रीशे । वास्ताम् ॥ |
| द्व्यक्षरा वृत्तिः । अत्युक्था । | | |
| स्त्री | गौ स्त्री ऽ,ऽ | गोपस्त्रीभिः । कृष्णो रेमे ॥ |
| त्र्यक्षरा वृत्तिः । मध्या । | | |
| नारी | मो नारी ऽऽऽ | गोपानां नारीभिः । क्लिष्टोऽव्यात् कृष्णो वः ॥ |
| मृगी | रो मृगी ऽ।ऽ | सा मृगीलोचना । राधिका श्रीमते ॥ |
| चतुरक्षरा वृत्तिः । प्रतिष्ठा । | | |
| कन्या | म्गौ चेत् कन्या ऽ,ऽऽऽ | भास्वत्कन्या सैका धन्या । यस्याः कूले कृष्णोऽखेलत् ॥ |
| सती | नगि सती ।।।,ऽ | सुररिपो ! तव पदम् । नमति या ननु सती ॥ |
| पञ्चाक्षरा वृत्तिः । सुप्रतिष्ठा । | | |
| पङ्क्तिः | भगौ गिति पङ्क्तिः ऽ।।,ऽ,ऽ | कृष्णसनाथा तर्णकपङ्क्तिः । यामुनकच्छे चारु चचार ॥ |
| प्रिया | सलगैः प्रिया ।।ऽ,।,ऽ | व्रजसुभ्रुवो विलसत्कलाः । अभवन् प्रिया सुरवैरिणः ॥ |
| षडक्षरा वृत्तिः । गायत्री । | | |
| तनुमध्या | त्यौ चेत् तनुमध्या ऽऽ।,।ऽऽ | मूर्तिर्मुररातेरत्यद्भुतरूपा । आस्तां मम चित्ते नित्यं तनुमध्या ॥ |
| शशिवदना | शशिवदना न्यौ ।।।,।ऽऽ | शशिवदनानां व्रजतरुणीनाम् । अधरसुधोर्म्मिं मधुरिपुरैच्छत् ॥ |
| सोमराजी | द्विया सोमराजी ।ऽऽ,।ऽऽ | हरे ! सोमराजीसमा ते यशःश्रीः । जगन्मण्डलस्य च्छिनत्त्यन्धकारम् ॥ |
| विद्युल्लेखा | विद्युल्लेखा मो मः ऽऽऽ,ऽऽऽ | |
| वसुमती | त्सौ चेद् वसुमती ऽऽ।,।।ऽ | |
| सप्ताक्षरा वृत्तिः । उष्णिक् । | | |
| मधुमती | ननगि मधुमती ।।।,।।।,ऽ | रविदुहितृतटे नवकुसुमततिः । व्यधित मधुमती मधुमथनमुदम् ॥ |
| कुमारललिता | कुमारललिता ज्सगाः ।ऽ।,।।ऽ,ऽ | मुरारितनुवल्ली कुमारललिता सा । व्रजैणनयनानां ततान मुदमुच्चैः ॥ |
| मदलेखा | मसगौ स्यात् मदलेखा ऽऽऽ,।।ऽ,ऽ | रङ्गे बाहुविवल्गद्दन्तीन्द्राङ्गदलेखा । लग्नाभून्मुरशत्रौ कस्तूरीरसचर्चा ॥ |
| हंसमाला | सरगैर्हंसमाला ।।ऽ,ऽ।ऽ,ऽ | |
| अष्टाक्षरा वृत्तिः । अनुष्टुप् । | | |
| चित्रपदा | चित्रपदा यदि भौ गौ ऽ।।,ऽ।।,ऽ,ऽ | यामुनसैकतदेशे गोपवधूजनकेलौ । कंसरिपोर्गतिलीला चित्रपदा जगदव्यात् ॥ |
| माणवकम् | भात्तलगा माणवकम् ऽ।।,ऽऽ।,।,ऽ | चञ्चलचूडं चपलैर्वत्सकुलैः केलिपरम् । ध्याय सखे स्मेरमुखं नन्दसुतं माणवकम् ॥ |
| माणवकक्रीडितमिति केचित् । | | |
| विद्युन्माला | मो मो गो गो विद्युन्माला ऽऽऽ,ऽऽऽ,ऽ,ऽ | वासो वल्लीविद्युन्माला बर्हश्रेणी शक्रश्चापः । यस्मिन्नास्ते तापोच्छित्त्यै गोमध्यस्थः कृष्णाम्भोदः ॥ |
| समानिका | ग्लौ रजौ समानिका तु ऽ,।,ऽ।ऽ,।ऽ। | यस्य कृष्णपादपद्ममस्ति हृत्तडागसद्म । धीः समानिका परेण नोचिताञ्च मत्सरेण ॥ |
| प्रमाणिका | प्रमाणिका जरौ लगौ ।ऽ।,ऽ।ऽ,।,ऽ | पुनातु भक्तिरच्युता सदाच्युताङ्घ्रिपद्मयोः । श्रुतिस्मृतिप्रमाणिका भवाम्बुराशितारिका ॥ |
| नगस्वरूपिणी इति कुत्रापि । | | |
| गजगतिः | नभलगा गजगतिः ।।।,ऽ।।,।,ऽ | रविसुतापरिसरे विहरतो दृशि हरेः । व्रजवधूगजगतिर्मुदमलं व्यतनुत ॥ |
| हंसरुतम् | म्नौ गौ हंसरुतमेतत् ऽऽऽ,।।।,ऽ,ऽ | |
| नाराचिका | नाराचिका तरौ लगौ ऽऽ।,ऽ।ऽ,।,ऽ | |
| नवाक्षरा वृत्तिः । बृहती । | | |
| भुजगशिशुभृता | भुजगशिशुभृता नौ मः ।।।,।।।,ऽऽऽ | कृतलटभिकटचौर्यो भुजगशिशुभृता यासीत् । सुररिपुदलिते नागे व्रजजनसुखदा साभूत् ॥ |
| भृतेयञ्च सृतेति सुतेति च केचित् । | | |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
| --- | --- | --- |
| मणिमध्यम् | स्यान्मणिमध्यं चेत् भमसाः ऽ।।,ऽऽऽ,।।ऽ | कालियभोगाभोगगतस्तन्मणिमध्यस्फीतवचा ।<br>चित्रपदाभो नन्दसुतश्चारु ननर्त स्मेरसुखः ॥ |
| भुजङ्गसङ्गता | सजरैर्भुजङ्गसङ्गता ।।ऽ,।ऽ।,ऽ।ऽ | तरला तरङ्गरिङ्गितैर्यमुना भुजङ्गसङ्गता ।<br>कथमेतु यतुश्चारकश्चपलः सदैव तां हरिः ॥ |
| हलमुखी | रान्नसाविह हलमुखी ऽ।ऽ,।।।,।।ऽ | |
| भद्रिका | भद्रिका भवति रो नरौ ऽ।ऽ,।।।,ऽ।ऽ | |
| दशाक्षरा वृत्तिः । पङ्क्तिः । | | |
| रुक्मवती<br>रूपवती क्वचित् । चम्पकमाला इति क्वापि । | रुक्मवती सा यत्र भमस्गाः ऽ।।,ऽऽऽ,।।ऽ,ऽ | कायमनोवाक्यैः परिशुद्धैर्यस्य सदा कंसद्विषि भक्तिः ।<br>राज्यपदे हर्म्यालिन्ददारा रुक्मवती विप्रः खलु तस्य ॥ |
| मत्ता | ज्ञेया मत्ता मभसगयुक्ता ऽऽऽ,ऽ।।,।।ऽ,ऽ | पीत्वा मत्ता मधु मधुपाली कालिन्दीये तटवनकुञ्जे ।<br>उद्दीव्यन्तीर्व्रजजनरामाः कामासक्ता मधुजिति चक्रे ॥ |
| त्वरितगतिः | त्वरितगतिश्च नजनगैः ।।।,।ऽ।,।।।,ऽ | त्वरितगतिर्व्रजयुवतिस्तरणिसुताविपिनगता ।<br>मुररिपुणा रतिगुरुणा परिरमिता प्रमदमिता ॥ |
| मनोरमा | नरजगैर्भवेन्मनोरमा ।।।,ऽ।ऽ,।ऽ।,ऽ | तरणिजातटे विहारिणी व्रजविलासिनी विलासतः ।<br>मुररिपोस्तनुः पुनातु वः सुकृतशालिनां मनोरमा ॥ |
| शुद्धविराट् | म्सौ जगौ शुद्धविराडिदं मतम् ऽऽऽ,।।ऽ,।ऽ।,ऽ | |
| पणवम् | म्नौ य्गौ चेति पणवनामेदम् ऽऽऽ,।।।,।ऽऽ,ऽ | |
| मयूरसारिणी | र्जौ र्गौ मयूरसारिणी स्यात् ऽ।ऽ,।ऽ।,ऽ।ऽ,ऽ | |
| उपस्थिता | तौ ज्जौ गुरुणेयमुपस्थिता ऽऽ।,।ऽ।,।ऽ।,ऽ | |
| दीपकमाला | दीपकमाला भमौ मता जगौ ऽ।।,ऽऽऽ,।ऽ।,ऽ | |
| हंसी | ज्ञेया हंसी मभनगयुता ऽऽऽ,ऽ।।,।।।,ऽ | |
| एकादशाक्षरा वृत्तिः । त्रिष्टुप् । | | |
| इन्द्रवज्रा | स्यादिन्द्रवज्रा यदि तौ जगौ गः ऽऽ।,ऽऽ।,।ऽ।,ऽ,ऽ | गोष्ठे गिरिं सव्यकरेण धृत्वा रुष्टेन्द्रवज्राहतिमुक्तवृष्टौ ।<br>यो गोकुलं गोपकुलञ्च सुस्थं चक्रे स नो रक्षतु चक्रपाणिः ॥ |
| उपेन्द्रवज्रा<br>उपेन्द्रवज्रायाः इन्द्रवज्रायाश्च चरणघटिता उपजातयः । ताश्च चतुर्णां प्रस्तारभेदादाद्यन्तौ त्यक्त्वा चतुर्दशप्रकारा भवन्ति । | उपेन्द्रवज्रा जतजास्ततो गौ ।ऽ।,ऽऽ।,।ऽ।,ऽ,ऽ<br>अनन्तरोदीरितलक्ष्मभाजौ<br>पादौ यदीयावुपजातयस्ताः ।<br>इत्थं किलान्यास्वपि मिश्रितासु<br>वदन्ति जातिष्विदमेव नाम ॥ | उपेन्द्रवज्रादिमणिच्छटाभिर्विभूषणानां छुरितं वपुस्ते ।<br>स्मरामि गोपीभिरुपास्यमानं सुरद्रुमूले मणिमण्डपस्थम् ॥ |
| सुमुखी | ननजलगैर्गदिता सुमुखी ।।।,।ऽ।,।ऽ।,।,ऽ | तरणिसुतातटकुञ्जगृहे वदनविधुस्मितदीधितिभिः ।<br>तिमिरमुदस्य मुखं सुमुखी हरिमवलोक्य चुचुम्ब चिरम् ॥ |
| शालिनी<br>अस्याश्चतुर्थे ततः सप्तमे च यतिः । | मात्तौ गौ चेत् शालिनी वेदलोकैः<br>ऽऽऽ,ऽऽ।,ऽऽ।,ऽ,ऽ | अंहो हन्ति ज्ञानवृद्धिं विधत्ते धर्मं धत्ते काममर्थञ्च सूते ।<br>मुक्तिं दत्ते सर्वदोपास्यमाना पुंसां श्रद्धाशालिनी विष्णुभक्तिः ॥ |
| वातोर्म्मी | वातोर्म्मीयं गदिता म्भौ तगौ गः<br>ऽऽऽ,ऽ।।,ऽऽ।,ऽ,ऽ | ध्याता मूर्त्तिः क्षणमप्यच्युतस्य<br>श्रेणी नाम्नां गदिता हेलयापि ।<br>संसारेऽस्मिन् दुरितं हन्ति पुंसां<br>वातोर्म्मीपोतमिवाम्भोधिमध्ये ॥ |
| भ्रमरविलसिता<br>भ्रमरविलसितमिति केचित् । | मो गो नौ गो भ्रमरविलसिता ऽऽऽ,ऽ,।।।,।।।,ऽ | मुग्धे ! मानं परिहर न चिरात्तारुण्यं ते सफलयतु हरिः ।<br>पुष्पावल्यो भ्रमरविलसिताभावे शोभां कलयति किमु ताम् ॥ |
| अनुकूला | स्यादनुकूला भतनगगाश्चेत् ऽ।।,ऽऽ।,।।।,ऽ,ऽ | वल्लववेशा मुररिपुमूर्त्तिर्गोपवधूटीकृतरतिपूर्त्तिः ।<br>वाञ्छितसिद्ध्यै प्रणतिपरस्य स्यादनुकूला जगति न कस्य ॥ |
| रथोद्धता | रात् परैर्नरलगै रथोद्धता ऽ।ऽ,।।।,ऽ।ऽ,।,ऽ | राधिका दधिविलोडनस्थिता कृष्णवेणुनिनदैरथोद्धता ।<br>यामुनं तटनिकुञ्जमञ्जसा सा जगाम सलिलाहृतिच्छलात् ॥ |
| स्वागता | स्वागता रनभगैर्गुरुणा च ऽ।ऽ,।।।,ऽ।।,ऽ,ऽ | यस्य चेतसि सदा मुरवैरी पल्लवीजनविलासविलोलः ।<br>तस्य नूनममरालयभाजः स्वागतादरकरः सुरराजः ॥ |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
|---|---|---|
| दोधकम् | दोधकमिच्छति भत्रितयाद्गौ ऽ।।,ऽ।।,ऽ।।,ऽ,ऽ | देव ! सदोधकदम्बतलस्थ ! श्रीधर ! तावकनामपदं मे ।<br>कण्ठतलेऽसुविनिर्गमकाले स्वल्पमपि प्रणमेष्यति योगम् ॥ |
| मोटनकम् | स्यान्मोटनकं तजजाश्च लगौ ऽऽ।,।ऽ।,।ऽ।,।,ऽ | दृष्टे खलु मल्लकलाकुशलश्चाणूरमहाभटमोटनकम् ।<br>यः केलिलवेन चकार स मे संसाररिपुं प्रतिमोटयतु ॥ |
| श्येनी<br>श्येनिका इति क्वचित् । | श्येन्युदीरिता रजौ रलौ गुरुः ऽ।ऽ,।ऽ।,ऽ।ऽ,।,ऽ | यस्य कीर्त्तिरिन्दुकुन्दचन्दनश्येन्यघौघलोकपावनी सदा ।<br>जाह्नवीव विश्ववन्द्यविभ्रमा तं भजामि भावगम्यमच्युतम् ॥ |
| श्रीः | वाणरसैः स्यात् भतनगगैः श्रीः ऽ।।,ऽऽ।,।।।,ऽ,ऽ | |
| वृत्ता | ननसगगुरुरचिता वृत्ता ।।।,।।।,।।ऽ,ऽ,ऽ | |
| भद्रिका | ननरलगुरुभिश्च भद्रिका ।।।,।।।,ऽ।ऽ,।,ऽ | |
| मौक्तिकमाला | मौक्तिकमाला यदि भतनात् गौ ऽ।।,ऽऽ।,।।।,ऽ,ऽ | |
| उपस्थितम् | उपस्थितमिदं जसौ ताद् गकारौ।ऽ।,।।ऽ,ऽऽ।,ऽ,ऽ | |
| उपचित्रम् | उपचित्रमिदं सससाल्लगौ ।।ऽ,।।ऽ,।।ऽ,।,ऽ | |
| कुपुरुषजनिता | कुपुरुषजनिता ननौ रगौ गः ।।।,।।।,ऽ।ऽ,ऽ,ऽ | |
| अनवसिता | अनवसिता न्यौ भगौ गुरुरन्ते ।।।,।ऽऽ,ऽ।।,ऽ,ऽ | |
| विध्यङ्कमाला | विध्यङ्कमाला भवेत्तौ तगौ गः ऽऽ।,ऽऽ।,ऽऽ।,ऽ,ऽ | |
| शान्तपदम् | शान्तपदं स्याद्भतनगलैश्च ऽ।।,ऽऽ।,।।।,ऽ,। | |
| शिखण्डितम् | शिखण्डितमिदं जसौ तगौ गुरुश्चेत्<br>।ऽ।,।।ऽ,ऽऽ।,ऽ,ऽ | |
| द्वादशाक्षरा वृत्तिः । जगती । | | |
| चन्द्रवर्त्म | चन्द्रवर्त्म निगदन्ति रनभसैः ऽ।ऽ,।।।,ऽ।।,।।ऽ | चन्द्रवर्त्म पिहितं घनतिमिरे राजवर्त्म रहितं जनगमनैः ।<br>इष्टवर्त्म तदलङ्कुरु सरसे ! कुञ्जवर्त्मनि हरिस्तव कुतुकी ॥ |
| वंशस्थविलम्<br>वंशस्तनितमिति क्वापि । | वदन्ति वंशस्थविलं जतौ जरौ ।ऽ।,ऽऽ।,।ऽ।,ऽ।ऽ | विलासवंशस्थविलं सुखानिलैः<br>प्रपूर्य्य यः पञ्चमरागमुद्गिरन् ।<br>व्रजाङ्गनानामपि गानशालिनां<br>जहार मानं स हरिः पुनातु नः ॥ |
| इन्द्रवंशा<br>वंशस्थविलेन्द्रवंशाचरणोभयघटिता-<br>श्चतुर्व्वर्गप्रस्तारीयाद्यन्तव्यतिरिक्त-<br>चतुर्द्दशप्रकारा उपजातयो भवन्ति। | स्यादिन्द्रवंशा ततजैरसंयुता ऽऽ।,ऽऽ।,।ऽ।,ऽ।ऽ | दैत्येन्द्रवंशाग्निरुदीर्णदीधितिः<br>पीताम्बरोऽसौ जगतीतमोहरः ।<br>यस्मिन् ममज्जुः शलभा इव स्वयं<br>ते कंसचाणूरमुखा मखद्विषः ॥ |
| जलोद्धतगतिः | जसौ जसयुतौ जलोद्धतगतिः ।ऽ।,।।ऽ,।ऽ।,।।ऽ | यदीयहलतो विलोक्य विपदं<br>कलिन्दतनया जलोद्धतगतिः ।<br>विलासविपिनं विवेश सहसा<br>करोतु कुशलं हली स जगताम् ॥ |
| भुजङ्गप्रयातम् | भुजङ्गप्रयातं चतुर्भिर्यकारैः ।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ | सदारात्मजज्ञातिभृत्यो विहाय<br>क्षमेतं ह्रदं जीवनं लिप्समानः ।<br>मया कोपितः कालियेत्थं कुरु त्वं<br>भुजङ्ग ! प्रयातं द्रुतं सागराय ॥ |
| तोटकम् | वद तोटकमब्धिसकारयुतम् ।।ऽ,।।ऽ,।।ऽ,।।ऽ | यमुनातटमच्युतकेलिकला-<br>लसदङ्घ्रिसरोरुहसङ्गरुचिम् ।<br>मुदितोऽटकलेरपनेतुमघं<br>यदि चेच्छसि जन्म निजं सफलम् ॥ |
| स्रग्विणी | कीर्त्तितैषा चतूरेफिका स्रग्विणी<br>ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | इन्द्रनीलोपलेनेव या निर्म्मिता<br>शातकुम्भद्रवालङ्कृता शोभते ।<br>नव्यमेघच्छविः पीतवासा हरे-<br>र्मूर्त्तिरास्तां जयायोरसि स्रग्विणी ॥ |
| वैश्वदेवी | वाणाश्वैश्छिन्ना वैश्वदेवी ममौ यौ<br>ऽऽऽ,ऽऽऽ,।ऽऽ,।ऽऽ | अर्च्चामन्येषां त्वं विहायामराणा-<br>मद्वैतेनैकं लक्ष्मणाश्चं भजस्व ।<br>तत्राशेषात्मन्यर्च्चिते भाविनी ते<br>भ्रातः ! सम्पन्नाराधना वैश्वदेवी ॥ |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
|---|---|---|
| प्रमिताक्षरा | प्रमिताक्षरा सजससैः कथिता ।।ऽ,।ऽ।,।।ऽ,।।ऽ | अन्दतस्य शीकरमिवोद्गिरती<br>रदमौक्तिकांशुलहरीच्छुरिता ।<br>प्रमिताक्षरा मुररिपोर्भणिति-<br>र्जनसुभ्रुवामभिजहार मनः ॥ |
| द्रुतविलम्बितम् | द्रुतविलम्बितमाह नभौ भरौ ।।।,ऽ।।,ऽ।।,ऽ।ऽ | तरणिजापुलिने नववल्लवी-<br>परिषदा सह केलिकुतूहलात् ।<br>द्रुतविलम्बितचारुविहारिणं<br>हरिमहं हृदयेन सदा वहे ॥ |
| मन्दाकिनी | ननररघटिता तु मन्दाकिनी ।।।,।।।,ऽ।ऽ,ऽ।ऽ | बलिदमनविधौ बभौ सङ्गता<br>पदजलरुचि यस्य मन्दाकिनी ।<br>सुरनिहितसिताम्बुजस्रग्विभा<br>हरतु जगदघं स पीताम्बरः ॥ |
| कुसुमविचित्रा | नयसहितौ न्यौ कुसुमविचित्रा ।।। ।ऽऽ,।।।,।ऽऽ | विपिनविहारे कुसुमविचित्रा<br>कुतुकितगोपीमहितचरित्रा ।<br>मुररिपुमूर्त्तिर्मुखरितवंशा<br>चिरमवताद्वस्तरलवतंसा ॥ |
| तामरसम् | इह वद तामरसं नजजा यः ।।।,।ऽ।,।ऽ।,।ऽऽ | स्फुटसुषमामकरन्दमनोज्ञं<br>व्रजललनानयनालिनिपीतम् ।<br>तव मुखतामरसं मुरशत्रो !<br>हृदयतडागविकाशि ममास्तु ॥ |
| मालती<br>यमुनेति क्वापि । | भवति नजावथ मालती जरौ ।।।,।ऽ।,।ऽ।,ऽ।ऽ | इह कलयाच्युतकेलिकानने<br>मधुरससौरभसारलोलुपः ।<br>कुसुमकृतस्मितचारुविभ्रमा<br>मलिरपि चुम्बति मालतीं मुहुः ॥ |
| मणिमाला<br>अस्याः षड्वर्णैर्यतिः । | त्यौ त्यौ मणिमाला छिन्ना गुहवक्त्रैः<br>ऽऽ।,।ऽऽ,ऽऽ।,।ऽऽ | प्रह्वामरमौली रत्नोपलकॢप्ते<br>जातप्रतिबिम्बा शोणा मणिमाला ।<br>गोविन्दपदाब्जे राजी नखराणा-<br>मास्तां मम चित्ते ध्वान्तं प्रशमयन्ती ॥ |
| जलधरमाला<br>अस्याश्चतुर्भिरष्टाभिश्च यतिः । | मो भः स्मौ चेज्जलधरमालाब्ध्यष्टैः<br>ऽऽऽ,ऽ।।,।।ऽ,ऽऽऽ | या भक्तानां कलिदुरितोत्तप्तानां<br>तापोच्छेदे जलधरमाला नव्या ।<br>भव्याकारा दिनकरपुत्रीकूले<br>केलीलोला हरितनुरव्यात् सा वः ॥ |
| पुटः | वसुयुगविरतिर्नौ म्यौ पुटोऽयम् ।।।,।।।,ऽऽऽ,।ऽऽ | |
| प्रमुदितवदना<br>प्रभेति मल्लिनाथः । गौरीति<br>कौमुदीकारः । | प्रमुदितवदना भवेन्नौ च रौ ।।।,।।।,ऽ।ऽ,ऽ।ऽ | |
| प्रियंवदा | भुवि भवेन्नभजरैः प्रियंवदा ।।।,ऽ।।,।ऽ।,ऽ।ऽ | |
| ललिता | धीरैरभाणि ललिता तभौ जरौ ऽऽ।,ऽ।।,।ऽ।,ऽ।ऽ | |
| उज्ज्वला | ननभरसहिता गदितोज्ज्वला ।।।,।।।,ऽ।।,ऽ।ऽ | |
| नवमालिका | इह नवमालिका नजभयैः स्यात् ।।।,।ऽ।,ऽ।।,।ऽऽ | |
| ललना | पञ्चमुनि भ्मौ सास् सयुता ललना<br>ऽ।।,ऽऽऽ,।।ऽ,।।ऽ | |
| ललितम् | ललितमभिहितं नौ म्रौ नामतः ।।।,।।।,ऽऽऽ,ऽ।ऽ | |
| द्रुतपदम् | द्रुतपदं भवति नभनयाश्चेत् ।।।,ऽ।।,।।।,।ऽऽ | |
| विद्याधारः | सर्वे मा यस्मिन् सोऽयं विद्याधारः स्यात्<br>ऽऽऽ,ऽऽऽ,ऽऽऽ,ऽऽऽ | |
| पञ्चचामरम् | लघुर्गुरुर्वदन्ति पञ्चचामरम् ।ऽ।ऽ।ऽ।ऽ।ऽ | |
| सारङ्गम् | सारङ्गकं समस्तैस्तकारैस्तु ऽऽ।,ऽऽ।,ऽऽ।,ऽऽ। | |
| मौक्तिकदाम | समस्तजमीरय मौक्तिकदाम ।ऽ।,।ऽ।,।ऽ।,।ऽ।, | |

| छन्दसां वृत्तिनामानि। | छन्दसां लक्षणानि। | छन्दसामुदाहरणानि। |
|---|---|---|
| मोटकम् | मोटकनाम समस्तभमीरय ऽ।।,ऽ।।,ऽ।।,ऽ।। | * |
| तरलनयनम् | वरलघु तरलनयनमिह ।।।।।।।।।।।। | |
| त्रयोदशाक्षरा वृत्तिः। अतिजगती। | | |
| प्रहर्षिणी<br>त्रिभिर्दशभिश्च यतिः। | आशाभिर्मनजरगाः प्रहर्षिणीयम्<br>ऽऽऽ,।।।,।ऽ।,ऽ।ऽ,ऽ | गोपीनामधरसुधारसस्य पानै-<br>रुत्तुङ्गस्तनकलसोपगूहनैश्च ।<br>आश्चर्यैरपि रतिविभ्रमैर्मुरारेः<br>संसारे मतिरभवत् प्रहर्षिणीह ॥ |
| रुचिरा<br>चतुर्भिर्नवभिश्च यतिः। | जभौ सजौ गिति रुचिरा चतुर्ग्रहैः<br>।ऽ।,ऽ।।,।।ऽ,।ऽ।,ऽ | पुनातु वो हरिरतिरासविभ्रमी<br>परिभ्रमन् व्रजरुचिराङ्गनान्तरे ।<br>समीरणोल्लसितलतान्तरालगो<br>यथा मरुत्तरलतमालभूरुहः ॥ |
| मत्तमयूरः<br>चतुर्भिर्नवभिश्च यतिः। | वेदैरन्ध्रैर्म्तौ यसगा मत्तमयूरः<br>ऽऽऽ,ऽऽ।,।ऽऽ,।।ऽ,ऽ | लीलानृत्यन्मत्तमयूरध्वनिकान्तं<br>नृत्यद्गोपीमोदिपयोदानिलरम्यम् ।<br>कामक्रीडालम्पटमना गोपवधूभिः<br>कंसध्वंसी निर्जनवृन्दावनमाप ॥ |
| चण्डी | नयुगलसयुगलगैरिति चण्डी ।।।,।।।,।।ऽ,।।ऽ,ऽ | जयति दितिजरिपुताण्डवलीला-<br>कुपितकवलककरकालियमौली ।<br>चरणकमलयुगचापलचण्डी<br>पदनखरचितभोगमणिश्रीः ॥ |
| मञ्जुभाषिणी<br>सुनन्दिनीति शम्भौ | सजसा जगौ च यदि मञ्जुभाषिणी<br>।।ऽ,।ऽ।,।।ऽ,।ऽ।,ऽ | अभितोऽभिनीतलकरेण लालयं-<br>स्तनुकान्तिचोरितविलोचनो हरे ! ।<br>नियतं कलानिधिरसीति वल्लवी<br>सुरमच्युते यधित मञ्जुभाषिणी ॥ |
| चन्द्रिका<br>उत्पलिनीति क्वापि। विद्युदिति क्षमेति च क्वापि। सप्तभिः षड्भिश्च यतिः। | ननततगुरुभिश्चन्द्रिकाऽश्वर्तुभिः ।।।,।।।,ऽऽ।,ऽऽ।,ऽ | शरदमलतरचन्द्रिकाधालिते<br>दिनकरतनयातीरदेशे हरिः ।<br>विहरति रभसाद्वल्लवीभिः समं<br>त्रिदिवयुवतिभिः कोऽपि देवो यथा ॥ |
| कलहंसः<br>सिंहनादः क्वापि। | सजसाः सगौ च कथितः कलहंसः<br>।।ऽ,।ऽ।,।।ऽ,।।ऽ,ऽ | यमुनाविहारकुतुके कलहंसो<br>व्रजकामिनीकमलिनीकृतकेलिः ।<br>जनचित्तहारिकलकण्ठनिनादः<br>प्रमदं तनोतु तव नन्दतनूजः ॥ |
| प्रबोधिता | सजसा जगौ च भवति प्रबोधिता ।।ऽ,।ऽ।,।।ऽ,।ऽ।,ऽ | प्रथिता त्वया चटुलमानिनिक्रिया<br>रतिकेलिकुञ्जनिलये विलासिनी ।<br>मुरवैरिणा वदनचुम्बनादिना<br>स्मितमाततान सपदि प्रबोधिता ॥ |
| मृगेन्द्रमुखम् | भवति मृगेन्द्रमुखं नजौ जरौ गः ।।।,।ऽ।,।ऽ।,ऽ।ऽ,ऽ | गुरुभुजवीर्यभरं हरिं मदान्धा<br>युधि समुपेत्य न दानवा जिजीवुः ।<br>क्षुधितमृगेन्द्रमुखं मृगा उपेत्य<br>क नु खलु बिभ्रति जीवनस्य योगम् ॥ |
| चञ्चरीकावली | यमौ रौ विख्याता चञ्चरीकावली गः<br>।ऽऽ,ऽऽऽ,ऽ।ऽ,ऽ।ऽ,ऽ | |
| चन्द्ररेखा | नसरयुगगैश्चन्द्ररेखर्तुलोकैः ।।।,।।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ | |
| कन्दुकम् | इदं कन्दुकं यत्र येश्चतुर्भ्यो गः ।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,ऽ | |
| मृगेन्द्रमुखम् | भवति मृगेन्द्रमुखं नजौ जरौ गः ।।।,।ऽ।,।ऽ।,ऽ।ऽ,ऽ | |
| उपस्थितम् | उपस्थितमिदं ज्सौ त्सौ यदि गुरुः स्यात्<br>।ऽ।,।।ऽ,ऽऽ।,।।ऽ,ऽ | |
| मञ्जुहासिनी | जतौ सजौ गो भवति मञ्जुहासिनी<br>।ऽ।,ऽऽ।,।।ऽ,।ऽ।,ऽ | |
| नन्दिनी | इह नन्दिनी सजससैर्गयुक्ताः ।।ऽ,।ऽ।,।।ऽ,।।ऽ,ऽ | |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|
| कुटजगतिः | कुटजगतिर्नजौ समसुं भृतौ गुरुः<br>।।।,।ऽ।,ऽऽऽ,ऽऽ।,ऽ | |
| प्रभावती । | यस्यां प्रिये ! प्रथमकमक्षरद्वयं<br>तुर्यं तथा गुरु नवमं दशान्तिमम् ।<br>सान्त्यं भवेद्यतिरपि चेद्युगग्रहैः<br>सा लक्ष्यतामन्तवते ! प्रभावती ॥ | |
| चतुर्दशाक्षरा वृत्तिः । शक्करी । | | |
| असम्बाधा<br>पञ्चभिर्नवभिश्च यतिः । | मो तो नो सौ गः शरनवभिरसम्बाधा<br>ऽऽऽ,ऽ,ऽ,।।।,।।।,ऽऽऽ | वीर्याग्नौ येन ज्वलति रणरसात् क्षिप्ते<br>दैत्येन्द्रे जाता धरणिरियमसम्बाधा ।<br>धर्मस्थित्यर्थं प्रकटिततनुसम्बन्धः<br>साधूनां बाधां प्रशमयतु स कंसारिः ॥ |
| वसन्ततिलकम्<br>अष्टाभिः षड्भिश्च यतिः । सिंहोन्नता चापि । सिंहोन्नता इति काश्यपः । उद्धर्षिणी इति सैतवः ॥ | ज्ञेयं वसन्ततिलकं तभजा जगौ गः<br>ऽऽ।,ऽ।।,।ऽ।,।ऽ।,ऽ,ऽ | फुल्लं वसन्ततिलकं तिलकं वनाल्या<br>लीलापरं पिककुलं कलमत्र रौति ।<br>वात्येष पुष्पसुरभिर्मलयाद्रिवातो<br>यातो हरिः स मथुरां विधिना हताः स्मः ॥ |
| अपराजिता<br>सप्तभिर्यतिः । | ननरसलघुगैः स्वरैरपराजिता ।।।,।।।,ऽ।ऽ,।।ऽ,।,ऽ | यदनवधिभुजप्रतापहतास्तदा<br>यदुनिचयचमूः परैरपराजिता ।<br>व्यजयत समरे समस्तरिपुव्रजं<br>स जयति जगतां गतिर्गरुडध्वजः ॥ |
| प्रहरणकलिका<br>सप्तभिर्यतिः । | ननभनलगिति प्रहरणकलिका ।।।,।।।,ऽ।।,।।।,।,ऽ | व्यथयति कुसुमप्रहरण ! कलिका<br>प्रमदवनभवा तव धनुषि तता ।<br>विरहविपदि मे शरणमिह ततो<br>मधुमथनगुणस्मरणमविरतम् ॥ |
| वासन्ती | मात्तो नो मो गौ यदि गदिता वासन्तीयम्<br>ऽऽऽ,ऽऽ।,।।।,ऽऽऽ,ऽ,ऽ | भ्राम्यद्भृङ्गीनिर्भरमधुरालापोद्गीतैः<br>श्रीखण्डाद्रेरश्चितपवनैर्मन्दान्दोला ।<br>लीलालोला पल्लवविलसद्धस्तोल्लासैः<br>कंसारातौ नृत्यति सहशी वासन्तीयम् ॥ |
| लोला<br>अस्याः सप्तभिर्यतिः । | द्विःसप्तच्छिदि लोला मृसौ म्भौ गौ चरणे चेत्<br>ऽऽऽ,।।ऽ,ऽऽऽ,ऽ।।,ऽ,ऽ | मुग्धे यौवनलक्ष्मीर्विद्युद्विभ्रमलोला<br>त्रैलोक्याद्भुतरूपो गोविन्दोऽतिदुरापः ।<br>तद्वृन्दावनकुञ्जे गुञ्जद्भृङ्गसनाथे<br>श्रीनाथेन समेता स्वच्छन्दं कुरु केलिम् ॥ |
| नान्दीमुखी<br>अस्याः सप्तभिर्यतिः । | स्वरभिदि यदि नौ तौ च नान्दीमुखी गौ<br>।।।,।।।,ऽऽ।,ऽऽ।,ऽ,ऽ, | सरसवगकुलालापनान्दीमुखीयं<br>लहरिभुजलता चारुफेनस्मितश्रीः ।<br>सुरहरकलयासत्तिमासाद्य किन्ते<br>प्रमुदितहृदया भानुजा नृत्यतीह ॥ |
| इन्दुवदना | इन्दुवदना भजसनैः सगुरुयुग्मैः ऽ।।,।ऽ।,।।ऽ,।।।,ऽ,ऽ | |
| नदी<br>सप्तभिर्यतिः । | ननतजगुरुगैः सप्तयतिर्नदी स्यात्<br>।।।,।।।,ऽऽ।,।ऽ।,ऽ,ऽ | |
| लक्ष्मीः | लक्ष्मीरन्त्यविरामा मृसौ तभौ गुरुयुग्मम्<br>ऽऽऽ,।।ऽ,ऽऽ।,ऽ।।,ऽ,ऽ | |
| सुपवित्रम् | चिननगगिति वसुयति सुपवित्रम्<br>।।।,।।।,।।।,।।।,ऽ,ऽ | |
| मध्यक्षामा | मध्यक्षामा युगदशविरमा म्भौ न्यौ गौ<br>ऽऽऽ,ऽ।।,।।।,।ऽऽ,ऽ,ऽ | |
| कुटिलम् | युगादिग्भिः कुटिलमिति सभौ न्यौ गौ चेत्<br>।।ऽ,ऽ।।,।।।,।ऽऽ,ऽ,ऽ | |
| प्रमदा | नजभजला गुरुश्च भवति प्रमदा<br>।।।,।ऽ।,ऽ।।,।ऽ।,।,ऽ | |

| छन्दसां वृत्तिनामानि। | छन्दसां लक्षणानि। | छन्दसामुदाहरणानि। |
|---|---|---|
| मञ्जरी<br>पञ्चमे नवमे च यतिः। | सजसा यलौ गिति शरस्वरैर्मञ्जरी<br>।।ऽ,।ऽ।,।।ऽ,।ऽऽ,।,ऽ | |
| कुमारी<br>अष्टमे नवमे च यतिः। | नजभजैर्गुरुश्च वसुग्रह् कुमारी<br>।।।,।ऽ।,ऽ।।,।ऽ।,ऽ,ऽ | |
| सुकेसरम् | नरनरैर्लगौ च रचितं सुकेसरम्<br>।।।,ऽ।ऽ,।।।,ऽ।ऽ,।,ऽ | |
| चन्द्रौरसः | म्भौ न्यौ लगौ चेदिह भवति च चन्द्रौरसः<br>ऽऽऽ,ऽ।।,।।।,।ऽऽ,।,ऽ | |
| चक्रपदम् | चक्रपदमिह भनननलगुरुभिः<br>ऽ।।,।।।,।।।,।।।,।,ऽ | |
| वासन्ती | वासन्तीयं स्यादिह खलु मतौ न्यौ गौ चेत्<br>ऽऽऽ,ऽऽ।,।।।,।ऽऽ,ऽ,ऽ | |
| पञ्चदशाक्षरा वृत्तिः। अतिशर्करी। | | |
| शशिकला | गुरुनिधनमनुलघुरिह शशिकला<br>।।।।।।।।।।।।।।,ऽ | मलयजतिलकसमुदितशशिकला<br>व्रजयुवतिलसदलिकगमनगता।<br>सरसिजनयनहृदयसलिलनिधिं<br>व्यतनुत विततरभसपरिसरणम्॥ |
| स्रक्<br>अस्याः षड्भिर्नवभिश्च यतिः। | सनियममपि च रसनव-रचितयतिः<br>।।।।।।,।।।,।।।।।,ऽ | अयि सहचरि! रुचिरतरगुणमयी<br>व्यदिमवर्तिरनयरतपरिमला।<br>अशिव निवह विलसदसुमनरसा<br>सुसखि! मुदितदनुजदलनहृदये॥ |
| मणिगुणनिकरः<br>अष्टभिः सप्तभिश्च यतिः। | वसुमुनियतिरिति मणिगुणनिकरः<br>।।।।।।,।,।।।।।,ऽ | नरकरिपुरवतु निखिलसुरगति-<br>रमितमहिमभरसहजनिवसतिः।<br>अनवधिमणिगुणनिकररचितः<br>सरिदधिपतिरिव धृततनुविभवः॥ |
| मालिनी<br>अष्टभिः सप्तभिश्च यतिः। | ननमयययुतेयं मालिनी भोगिलोकैः<br>।।।,।।।,ऽऽऽ,।ऽऽ,।ऽऽ | कमलदलनवर्णा पीतकौषेयवासा<br>रुचिरशिखिशिखण्डाबद्धधम्मिल्लपाशा।<br>अङ्गुलिनिहितवंशी वंशसुत्तानयन्ती<br>धृतमधुरिपुलीला मालिनी पातु राधा॥ |
| लीलाखेलः | एकन्यूनौ विद्युन्मालापादौ चेल्लीलाखेलः<br>ऽऽऽ,ऽऽऽ,ऽ,ऽ,ऽऽऽ,ऽऽऽ,ऽ | पायाद्वो गोविन्दः कालिन्दीकूलक्रीडाचक्रे<br>रासोल्लासक्रीडद्गोपीभिः सार्द्धं लीलाखेलः।<br>मन्दाकिन्यास्तीरोपान्ते स्वैरक्रीडाभिर्लीलो<br>यद्वद्देवानामीशः सर्वैश्चाभिः खेलन्तीभिः॥ |
| विपिनतिलकम् | विपिनतिलकं नसनरेफयुग्मैर्भवेत्<br>।।।,।।ऽ,।।।,ऽ।ऽ,ऽ।ऽ | विपिनतिलकं विकसितं वसन्तागमे<br>मधुलसमदैर्मधुकरै रवाभिर्वृतम्।<br>मलयमरुता रचितलास्यमालोकयन्<br>व्रजयुवतिभिर्विहरति स्म मुग्धो हरिः॥ |
| तूणकम् | तूणकं समानिकापदद्वयं विनान्तिमम्<br>ऽ,।,ऽ।ऽ,।ऽ।,ऽ,।,ऽ।ऽ,।ऽ | सा सुवर्णकेतकं विकाशि भृङ्गपूरितं<br>पञ्चबाणबाणजालपूर्णहेमतूणकम्।<br>राधिका वितर्क्य माधवाद्य मासि माधवे<br>मोहमेति निर्भरं त्वया विना कलानिधे!॥ |
| चन्द्रलेखा<br>सप्तमे अष्टमे च यतिः। | म्रौ म्यौ यौ चेद्भवेतां सप्ताष्टकैश्चन्द्रलेखा<br>ऽऽऽ,ऽ।ऽ,ऽऽऽ,।ऽऽ,।ऽऽ, | चिन्ताग्रस्ते ते मुरारे! प्राक्प्रकाशा कृशाङ्गी<br>म्लानच्छायं दुकूलं न जानते बिभ्रती सा।<br>राधाम्भोदस्य गर्भे लीना यथा चन्द्रलेखा<br>किं वार्त्ता तां स्मरन्ती धत्ते ध्रुवं जीवयोगम्॥ |
| चित्रा | चित्रा नामच्छन्दश्चिनुयात् म्मौ मो यकारौ<br>ऽऽऽ,ऽऽऽ,ऽऽऽ,।ऽऽ,।ऽऽ | गोपाली लीलालोला यद्वत् कालिन्दीकूलान्ते<br>खेलन्मुक्ताहारा व्यग्रस्रस्तामूर्ध्निचित्रा।<br>कंसारातेर्मूर्तिस्तद्वत् हृदि क्रीडतीयं<br>कोऽन्यः स्वर्गो मोक्षो वाङ्क्ष्यते तत्र जाने॥ |

| छन्दसां वृत्तिनामानि। | छन्दसां लक्षणगणाः। | छन्दसामुदाहरणानि। |
|---|---|---|
| प्रभद्रकम् | भवति नजौ भजौ रसहितौ प्रभद्रकम्<br>111,121 211,121,212 | |
| एला<br>पञ्चभिर्दशभिश्च यतिः। | सजना नयौ शरदशयतिरियमेला<br>112,121,111,111,122 | |
| कामक्रीडा | माः पञ्च स्युर्यस्यां सा कामक्रीडासंज्ञा ज्ञेया<br>222,222,222,222,222 | |
| सुखेलकम् | नजभजरैर्विराजितमिदं सुखेलकम्<br>111, 121,211,121,212 | |
| चन्द्रकान्ता<br>सप्तभिरष्टाभिश्च यतिः। | चन्द्रकान्ताभिधा रौ म्सौ यो विरमः स्वराष्टौ<br>212,212,222,112,122 | |
| उपमालिनी<br>अष्टाभिः सप्तभिश्च यतिः। | ननतभरलसाक्षरैरुपमालिनी<br>111,111,221,211,212 | |
| ऋषभः | ऋषभाख्यमेतदुदितं सजसा सयौ चेत्<br>112,121 112,112,122 | |
| मानसहंसः | कथयन्ति मानसहंसनाम सजौ जभराः<br>112,121,121 211,212 | |
| नलिनी | सगणैः शिवचक्रमितैर्गदिता नलिनी<br>112,112,112,112,112, | |
| भिन्दिपालकम् | प्रोक्तं भिन्दिपालकमिदं भजसनाश्च रः<br>211,121,112,111,212 | |
| षोडशाक्षरा वृत्तिः। अष्टिः। | | |
| चित्रम् | चित्रसंज्ञमीरितं समानिका पदद्वयम्<br>2,1,212,121,2,1,212,121 | विद्रुमारुणाधरोष्ठशोभिवेणुवाद्यहृष्ट-<br>वल्लवीजनाङ्गसङ्गजातपुलककण्टकाङ्ग!।<br>त्वां सदैव वासुदेव! पुण्यलभ्यपादसेव!<br>वन्यपुष्पचित्रकेश! संस्मरामि गोपवेश!॥ |
| ऋषभगजविलसितम्<br>गजतुरगविलसितमिति ग्रन्थौ।<br>सप्तभिर्नवभिश्च यतिः। | भ्रनिनगैः स्वराङ्कयतिऋषभगजविलसितम्<br>211,212,111,111,111,2 | यो हरिरुग्रनाद खरतरनखरधरै-<br>र्दर्पयदैत्यसिंहसुविकटहृदयतटम्।<br>किन्त्विह चित्रमेव यदखिलमपकृतवान्<br>कंसनिदेशगहन्यऋषभगजविलसितम्॥ |
| चकिता<br>अस्या अष्टमे यतिः। | भात् समतनगैरष्टच्छेदे स्यादिह चकिता<br>211,112,222,221,111,2 | दुर्वैयदसुरजयी दुःखे रागरतचकिता<br>यद्भुजपरिचयाता याता साध्वसविगमम्।<br>दीव्यति दिवि यन्नाला स्वैरं नन्दनविपिने<br>गच्छत शरणं सख्यां तं भीता भवरिपुतः॥ |
| पञ्चचामरम् | प्रमाणिका पदद्वयं वदन्ति पञ्चचामरम्<br>121,212,1,2,121,212,1,2 | सुरद्रुमूलमण्डपे विचित्ररत्ननिर्मिते<br>लसद्वितानभूषिते सलीलविभ्रमालसम्।<br>सुराङ्गनाभवल्लवीकरप्रपञ्चचामर-<br>स्फुरत्समीरवीजितं सदाच्युतं भजामि तम्॥ |
| मदनललिता<br>चतुर्थे षष्ठे च यतिः। | म्भौ नो म्नौ गो मदनललिता वेदैः षड्ऋतुभिः<br>222,211,111,222,111,2 | विभ्रश्यन्माल्यचिकुरा धौताधरपुटा<br>म्लायत्पत्रावलिकुचतटोच्छ्वासोर्मितरला।<br>राधात्यर्थं मदनललितान्दोलालसवपुः<br>कंसारातेरतिरसमहो चक्रेऽतिचटुलम्॥ |
| वाणिनी | नजभजरैर्यदा भवति वाणिनी गयुक्तैः<br>111,121,211,121,212,2 | स्फुरतु ममाननेऽद्य ननु वाणि! नीतिरम्यं<br>तव चरणप्रसादपरिपाकतः कवित्वम्।<br>भवजलराशिपारकरणक्षमं मुकुन्दं<br>सततमहं स्तवैः स्वरचितैः स्तवानि नित्यम्॥ |
| प्रवरललितम् | यमौ नः स्रौ गश्च प्रवरललितं नाम वृत्तम्<br>122,222,111,112,212,2 | सुजातोत्तुङ्गेभः शृङ्गे चलवलयझङ्कारयुक्तौ<br>सुधा माद्यन्त्याः प्रकटितसुधाकोटिमाद्यः।<br>स्मितं वक्त्रेऽकस्माद्दृशि पटुकटाक्षोर्मिलीला<br>हरौ जीयाद्दीव्यत् प्रवरललितं वल्लवीनाम्॥ |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|
| अचलधृतिः | द्विगुणितवसुलघुभिरचलधृतिरिह<br>IIIIIII,IIIIIII | तरणिदुहितृतटरुचिरतरवसति-<br>रमरमुनिसुरजनविहितनुतिरिह ।<br>मधुरिपुरभिनवजलधररुचितनु-<br>रचलधृतिरुदयति सुकृतिहृदि खलु ॥ |
| नवकुवलम् | नवकुवलं नजौ भजलगा यदा सुजला<br>III,IऽI,ऽII,IऽI,ऽऽI,ऽ | भ्रमरमयूरमानसमुदे पयोदध्वनि-<br>र्गजवृतं सुरारिभुजगेन्द्रसन्त्रासने ।<br>धरणिभरावतारविधिडिण्डिमाडम्बरः<br>स जयति कंसरङ्गभुवि सिंहनादो हरेः ॥ |
| धीरललिता | संकथिता भरौ नरनगाश्च धीरललिता<br>ऽII,ऽIऽ,III,ऽIऽ,III,ऽ | |
| अश्वगतिः | पञ्चभकारयुताऽश्वगतिर्यदि चान्त्यगुरुः<br>ऽII,ऽII,ऽII,ऽII,ऽII,ऽ | |
| मणिकल्पलता | नजरभभैर्गेन च स्यान्मणिकल्पलता<br>III,IऽI,ऽIऽ,ऽII,ऽII,ऽ | |
| रूपम् | यस्मिन् सर्वे गा राजन्ते ब्रह्माद्यं तद्रूपं नाम<br>ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ | |
| वरयुवतिः | भो रयना नगौ च यस्यां वरयुवतिरियम्<br>ऽII,ऽIऽ,Iऽऽ,III,III,ऽ | |
| सप्तदशाक्षरा वृत्तिः । अत्यष्टिः । | | |
| शिखरिणी<br>षष्ठे एकादशे च यतिः । | रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी<br>Iऽऽ,ऽऽऽ,III,IIऽ,ऽII,I,ऽ | करादस्य भ्रष्टं ननु शिखरिणी दृश्यति शिशो-<br>र्विलीनाः स्मः सद्यं नियतमवधेयं तदखिलैः ।<br>इति व्यग्रोपाधुर्वितनिभृतालापजनितं<br>स्मितं बिभ्रद्देवो जगदवतु गोवर्धनधरः ॥ |
| पृथ्वी<br>अष्टमे नवमे च यतिः । | जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः<br>IऽI,IIऽ,IऽI,IIऽ,Iऽऽ,I,ऽ | दुरन्तदनुजेश्वरप्रकरदुःसहस्त्रीभरं<br>जहार निजलीलया यदुकुलेऽवतीर्याशु यः ।<br>स एष जगतीगतिर्दुरितभारमस्मादृशां<br>हरिष्यति हरिः स्तुतिस्मरणचाटुभिस्तोषितः ॥ |
| वंशपत्रपतितम्<br>वंशदलमिति शम्भौ वंशपत्रपतिता इति केचित् । अस्य दशमे सप्तमे च यतिः । | दिङ्मुनि वंशपत्रपतितं भरनभनलगैः<br>ऽII,ऽIऽ,III,ऽII,III,I,ऽ | नूतनवंशपत्रपतितं रजनिजलवं<br>पश्य मुकुन्द ! मौक्तिकमिवोत्तममरकतगम् ।<br>एष च तं चकोरनिकरः प्रपिबति मुदितो<br>वाञ्छमवेत्य चन्द्रकिरणैरन्तलकणमिव ॥ |
| मन्दाक्रान्ता<br>अस्याश्चतुर्थे षष्ठे सप्तमे च यतिः ।<br>इयं दौत्यवर्णनोपयोगिनी प्रशस्ता । | मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्<br>ऽऽऽ,ऽII,III,ऽऽI,ऽऽI,ऽ,ऽ | प्रेमालापैः प्रियवितरणैः प्रीणितालिङ्गनाद्यै-<br>र्मन्दाक्रान्ता तदनु नियतं वश्यतामेति बाला ।<br>एवं शिक्षावचनसुधया राधिकायाः सखीनां<br>प्रीतः पायात् स्मितसुवदनो देवकीनन्दनो नः ॥ |
| हरिणी<br>षष्ठे चतुर्थे सप्तमे च यतिः । | नसमरसला गः षड्वेदैर्हयैर्हरिणी मता<br>III,IIऽ,ऽऽऽ,ऽIऽ,IIऽ,I,ऽ | व्यधित स विधिर्नेत्रं नीत्वा ध्रुवं हरिणीगणाद्-<br>व्रजजनगहशां सन्दोहस्योल्लसन्नयनश्रियम् ।<br>यदयमनिशं दूर्वाश्यामे मुरारिकलेवरे<br>व्यकिरदधिकं वक्राकाङ्क्षं विलोलविलोचनम् ॥ |
| नर्कुटकम् | यदि भवतो नजौ भजजला गुरु नर्कुटकम्<br>III,IऽI,ऽII,IऽI,IऽI,I,ऽ | व्रजवनिता वसन्तलतिका विलसत्कुसुमं<br>मधुमथनं प्रमत्तजनवाञ्छितकल्पतरुम् ।<br>विभुमभिनौति कोऽपि सुकृती मुदितेन हृदा<br>रुचिरपदावलीघटितनर्कुटकेन कविः ॥ |
| कोकिलकम्<br>अस्य सप्तमे षष्ठे चतुर्थे च यतिः । | हयऋतुसागरैर्यतियुतं यदि कोकिलकम्<br>III,IऽI,ऽII,IऽI,IऽI,I,ऽ | लसदरविन्दगन्धं मधुरभाषणमोदकरं<br>मधुसमयागमे सरसकेलिभिरुल्लसितम् ।<br>अखिलविलासयुक्तिं रविसुतावनकोकिलकं<br>ननु कलयामि तं सखि ! सदा हृदि नन्दसुतम् ॥ |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|
| हारिणी<br>अस्याश्चतुर्थे षष्ठे सप्तमे च यतिः । | वेदर्त्वश्वैर्मभनमयला गश्चेत्तदा हारिणी<br>ऽऽऽ,ऽ।।,।।।,ऽऽऽ,।ऽऽ,।,ऽ | यस्या नित्यं श्रुतिकुवलये श्रीशालिनी लोचने<br>रागः स्त्रीयोऽधरकिसलये लाक्षारसारङ्गमम् ।<br>गौरी कान्तिः प्रकृतिरुचिरा रम्याङ्गरागच्छटा<br>सा कंसारेरजनि न कथं राधा मनोहारिणी ॥ |
| भाराक्रान्ता<br>चतुर्थे षष्ठे सप्तमे च यतिः । | भाराक्रान्ता मभनरसला गुरुः श्रुतिषड्हयैः<br>ऽऽऽ,ऽ।।,।।।,ऽ।ऽ,।।ऽ,।,ऽ | भाराक्रान्ता मम तनुरियं गिरीन्द्रविधारणात्<br>कम्पं धत्ते श्रमजलकणं तथा परिमुञ्चति ।<br>इत्याद्यस्तम् जयति जलदश्यामाकुलवल्लवी-<br>संश्लेषोत्थं स्मरविलसितं विलोक्य गुरुं हरिः ॥ |
| हरिः | रसयुगहययुङ् नौ म्रौ सो लगौ हि यदा हरिः<br>।।।,।।।,ऽऽऽ,ऽ।ऽ,।।ऽ,।,ऽ | |
| कान्ता | भवेत् कान्ता युगरसहयैर्यभौ नरसा लगौ<br>।ऽऽ,ऽ।।,।।।,ऽ।ऽ,।।ऽ,।,ऽ | |
| चित्रलेखा<br>दशमे सप्तमे च यतिः । | ससजा भजगा ग दिक्स्वरैर्भवति चित्रलेखा<br>।।ऽ,।।ऽ,।ऽ।,ऽ।।,।ऽ।,ऽ,ऽ | |
| अतिशायिनी | ससजैरतिशायिनी मता भजपरैर्गुयुग्माम्<br>।।ऽ,।।ऽ,।ऽ।,ऽ।।,।ऽ।,ऽ,ऽ | |
| पञ्चचामरम् | अवेहि पञ्चचामरं जरौ जरौ जगौ लघुश्च<br>।ऽ।,ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽ।,ऽ,। | |
| अष्टादशाक्षरा वृत्तिः । धृतिः । | | |
| कुसुमितलतावेल्लिता<br>पञ्चमे षष्ठे सप्तमे च यतिः । | स्याद्भूतर्त्वश्वैः कुसुमितलतावेल्लिता म्तौ नयौ यौ<br>ऽऽऽ,ऽऽ।,।।।,।ऽऽ,।ऽऽ,।ऽऽ | क्रीडत्कालिन्दीललितलहरीवारिभिर्दाक्षिणात्यै-<br>र्वातैः खेलद्भिः कुसुमितलता वेल्लिता मन्दमन्दम् ।<br>भृङ्गालीगीतैः किसलयकरोल्लासितोल्लासलक्ष्मीं<br>तन्वाना चेतो रभसतरलं चक्रपाणेश्चकार ॥ |
| नन्दनम्<br>एकादशे सप्तमे च यतिः । इदमेव वेदरेफैर्भिन्ना महामालिका नाराचिकाद्यभिधानिका दशवसुभिर्भिन्ना इति कुत्रापि । | नजभजरैस्तु रेफसहितैः शिवैर्हयैर्नन्दनम्<br>।।।,।ऽ।,ऽ।।,।ऽ।,ऽ।ऽ,ऽ।ऽ | तरणिसुतातरङ्गपवनैः सलीलमान्दोलितं<br>मधुरिपुपादपङ्कजरजःसुपूतपृथ्वीतलम् ।<br>सुरहरचित्रचेष्टितकलाकलापसंस्मारकं<br>क्षितितलनन्दनं व्रज सखे ! सुखाय वृन्दावनम् ॥ |
| नाराचम् | इह ननरचतुष्कसृष्टन्तु नाराचमाचक्षते<br>।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | दिनकरतनयातटीकानने चारुसञ्चारिणी<br>श्रवणनिकटकृष्टमैत्रीक्षणा कृष्ण ! राधा त्वयि ।<br>ननु विकिरति नेत्रनाराचमेषा सितच्छेदनं<br>तदिह मदनविभ्रमोद्भ्रान्तचित्तावधत्स्व द्रुतम् ॥ |
| चित्रलेखा<br>चन्द्रलेखा इति क्वचित् । | मन्दाक्रान्ता नयरलघुयुता कीर्तिता चित्रलेखा<br>ऽऽऽ,ऽ।।,।।।,।,ऽऽ।,ऽऽ।,ऽ,ऽ | ब्रह्माऽसृष्टिन् जगति नवदृशां सारभूतं यदाभी-<br>दालक्ष्येदं व्रजयुवतिसभा वेधसा सा व्यधायि ।<br>नैतादृक् चेत् कथमुदधिसुतामन्तरेणाच्युतस्य<br>प्रीतं तस्यां नयनयुगमभूच्चित्रलेखाकुलायाम् ॥ |
| शार्दूलललितम्<br>द्वादशे चरणान्ते च यतिः । | मः सो जः सतसा दिनेशऋतुभिः शार्दूलललि-<br>तम्<br>ऽऽऽ,।।ऽ,।ऽ।,।।ऽ,ऽऽ।,।।ऽ | हत्वा कंसमृगे पराक्रमविधिं शार्दूलललितं<br>यश्चक्रे क्षितिभारकारिषु सुरारातिष्वतिदरम् ।<br>सन्तोषं परमन्तु देवनिवहे त्रैलोक्यधारकं<br>श्रेयो वः स तनोत्वपारमहिमा लक्ष्मीप्रियतमः ॥ |
| हरिणप्लुतम्<br>हरिणप्लुतेति कुत्रापि । | मात् सो जौ भरसंयुतौ करिवाजिखैर्हरिणप्लुतम्<br>ऽऽऽ,।।ऽ,।ऽ।,।ऽ।,ऽ।।,ऽ।ऽ | |
| अश्वगतिः | पञ्चभकारयुताश्वगतिर्यदि चान्त्यसरचिता<br>ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ।।,।।ऽ | |
| सुधा | सुधा तर्कैस्तर्कैर्भवति ऋतुभिर्यो मो नसतसाः<br>।ऽऽ,ऽऽऽ,।।।,।।ऽ,ऽऽ।,।।ऽ | |
| चित्रलेखा | वर्णाभैर्मननततमकैः कीर्तिता चित्रलेखेयम्<br>ऽऽऽ,।।।,।।।,ऽऽ।,ऽऽ।,ऽऽऽ, | |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
| --- | --- | --- |
| भ्रमरपदकम् | भारनना नसौ भ्रमरपदकमिदमभिहितम्<br>ऽ।।,ऽ।ऽ,।।।,।।।,।।।,।।ऽ | |
| शार्दूलम् | शार्दूलं वद मासषट्कयति मः सो जसौ रो मश्चेत्<br>ऽऽऽ,।।ऽ,।ऽ।,।।ऽ,ऽ।ऽ,ऽऽऽ | |
| केसरम् | अर्णाम्भोधैर्मभनयरयुगैर्वृत्तं मतं केसरम्<br>ऽऽऽ,ऽ।।,।।।,।ऽऽ,ऽ।ऽ,ऽ।ऽ | |
| चलम् | म्भौ न्जौ भ्रौ चेच्चलमिदमुदितं युगैर्मुनिभिः स्वरैः<br>ऽऽऽ,ऽ।।,।।।,।ऽ।,ऽ।।,ऽ।ऽ | |
| वाचला | सैका वसुविरतिस्तनौ रैश्चतुर्भिर्युता वाचला<br>ऽऽ।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | |
| लता | भवति नयुगलं रभौ रौ दशभिर्गजेन्द्रैर्लता<br>।।।,।।।,ऽ।ऽ,ऽ।।,ऽ।ऽ,ऽ।ऽ | |
| सिंहविस्फूर्ज्जितम् | तद्भूतर्ल्लोकैर्मौ भमौ विरतिश्चेत् सिंहविस्फूर्ज्जितं यौ<br>ऽऽऽ,ऽऽऽ,ऽ।।,ऽऽऽ,।ऽऽ,।ऽऽ | |
| हरनर्त्तनम्<br>विबुधप्रिया इति च कुत्रापि । | रसौ जजौ भरसंयुतौ करिवाजिभिर्हरनर्त्तनम्<br>ऽ।ऽ,।।ऽ,।ऽ।,।ऽ।,ऽ।।,ऽ।ऽ | |
| क्रीडचक्रम् | इदं क्रीडचक्रं सदीर्घं समस्तैर्यकारैः समेतम्<br>।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ, | |
| हीरकम् | हीरकमुदितं भसनजनैरिह रगयोऽन्ततः<br>ऽ।।,।।ऽ,।।।,।ऽ।,।।।,ऽ।ऽ | |
| ऊनविंशत्यक्षरा वृत्तिः। अतिधृतिः। | | |
| मेघविस्फूर्ज्जिता<br>षष्ठे षष्ठे सप्तमे च यतिः । | रसर्त्वश्वैर्य्मौ न्सौ ररगुरुयुतौ मेघविस्फूर्ज्जिता स्यात् ।<br>।ऽऽ,ऽऽऽ,।।।,।।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ | कदम्बामोदाढ्या विपिनपवनाः केकिनः कान्तकेका विनिद्राः कन्दल्यो दिशि दिशि मुदा दर्दुरा दृप्तनादाः । निशा नृत्यद्विद्युद्विलसितलसन्मेघविस्फूर्ज्जिता चेत् प्रियः स्वाधीनोऽसौ दनुजदलनो राज्यमस्मात् किमन्यत् ॥ |
| छाया<br>षष्ठे द्वादशे अन्ते च यतिः । | भवेत् सैवच्छाया तयुगगयुता स्यात् द्वादशान्ते यदा<br>।ऽऽ,ऽऽऽ,।।।,।।ऽ,ऽऽ।,ऽऽ।,ऽ | अभीरं जुष्टो यो वितरति लसद्गोपवध्वास्यलीनः स्फुरत्तानारम्भस्तवकिततनुश्चन्द्रांशुकालम्बितः । न यस्याङ्घ्रिच्छायामुपगतवतां संसारतीव्रातपस्तनोति प्रोत्तापं स जगदवनात् कंसारिकल्पद्रुमः ॥ |
| शार्दूलविक्रीडितम्<br>द्वादशे ऊनविंशतौ च यतिः । | सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम्<br>ऽऽऽ,।।ऽ,।ऽ।,।।ऽ,ऽऽ।,ऽऽ।,ऽ | गोविन्दं प्रणमोत्तमाङ्ग ! रसने ! त्वं घोषयाहर्निशं पाणी ! पूजयतं मनः ! स्मर पदे ! तस्यालयं गच्छतम् । एवञ्चेत् कुरुताखिलं मम हितं प्रीत्योदयस्तद् ध्रुवं न प्रेक्षे भवता कृते भवमहाशार्दूलविक्रीडितम् ॥ |
| सुरसा<br>सप्तमे चतुर्दशे अन्ते च यतिः । | म्रौ भ्नौ यो नो गुरुश्चेत् स्वरमुनिकरणै रात्र सुरसाम्<br>ऽऽऽ,ऽ।ऽ,ऽ।।,।।।,।ऽऽ,।।।,ऽ | कामक्रीडासतृष्णो मधुसमयसमारम्भरभसात् कालिन्दीकूलकुञ्जे विहरणकुतुकाकृष्टहृदयः । गोविन्दो बल्लवीनामधररससुधां प्राप्य सुरसां प्राक् पीयूषपानप्रभवजसुखं व्यस्मरदसौ ॥ |
| फुल्लदाम<br>पञ्चमे द्वादशे अन्ते च यतिः ।<br>पुष्पदाम इति केचित् । | मो गौ नौ तौ गौ स्वरहयतुरगैः फुल्लदाम प्रसिद्धम्<br>ऽऽऽ,ऽ,ऽ,।।।,।।।,ऽऽ।,ऽऽ।,ऽ,ऽ | मुग्धालोकानां प्रकटितकदनं व्यस्तमालोक्य कंसं कृष्णश्चेतोभिच्छिद्दिवसपतिभिर्व्योमसंस्थैर्विसृष्टम् । मुग्धामोदेन स्थगितदशदिगाभोगमाकृष्टभृङ्गं मौलौ दैत्यारेर्न्यपतदसुपमं स्वस्तरोः फुल्लदाम ॥ |
| पञ्चचामरः | नयुगलगलघू रजौ रगा यदा स पञ्चचामरः<br>।।।,।।।,ऽ,।,ऽ।ऽ,।ऽ।,ऽ।ऽ,।,ऽ | |
| बिम्बम् | वृत्तं बिम्बाख्यं शरमुनितुरगैर्म्तौ नृसौ ततौ चेद्गुरुः<br>ऽऽऽ,ऽऽ।,।।।,।।ऽ,ऽऽ।,ऽऽ।,ऽ | |

स्वच्छायाकाशमालोक्य स्वगुरूक्तक्रमेण वै ।
सम्मुखं गगनं पश्येन्निर्निमेषस्थैकधीः ॥
शुद्धस्फटिकसच्छायः पुरुषस्तत्र दृश्यते ।
न दृश्यते यदा तत्र पुनस्तद्वत् परीक्षयेत् ॥
षड्‌धा दर्शनेनैव साक्षात्कारो भवेद् ध्रुवम् ।
कस्यचिद् भाग्यतः पश्येद् यदि विप्रोऽविमोचदः ।
भवत्येव न सन्देहो गुरुविश्वासतः शिवे ! ।
गुरुं सम्यक् पूजयित्वा पश्येच्छायां समाहितः ॥
तथा षण्मासपर्य्यन्तं मृत्युस्तस्य न विद्यते ।
शिरोहीनं यदा पश्येत् षण्मासाभ्यन्तरे मृतिः ॥
यदा पादौ न दृश्येते भार्य्याहानिर्न संशयः ।
न दृश्येते यदा पाणी भ्रातृहानिर्न संशयः ॥
एतज्ज्ञात्वा सुधीः सम्यक् गङ्गातीरं समाश्रयेत् ।
योगाभ्यासेन सततं प्राणायामेन संस्थितिः ॥
यथा वा तत्समीपस्थो लक्षं मृत्युञ्जयं जपेत् ।
यो न शक्तो हविष्याशी सततागतमानसः ॥
मृत्युञ्जयेन सन्देहो ह्यन्यथा मृत्युमृच्छति ।
यदा तु मलिनं पश्येत् ज्वरपीडा भवेत्तदा ॥
तस्य शान्तिं प्रकुर्व्वीत शिवसेवां समाश्रितः ।
रक्तवर्णं यदा पश्येदैश्वर्य्यं भवति ध्रुवम् ॥
मध्यच्छिद्रं यदा पश्येत् प्रभुघातो भवेत्तदा ।
एवं सन्दर्शनाद्देवि ! ज्ञानवान् भवति ध्रुवम् ॥
नारदाय पुरा प्रोक्तं मया पुरुषदर्शनम् ।
तत्प्रसादाच्छायायोगी भूत्वा लोकांश्चरत्यसौ ॥
स्वच्छायादर्शनं देवि ! कलौ पुरुषलक्षणम् ।
दीर्घायुः समवाप्नोति ज्ञानञ्चापि सुनिर्म्मलम् ॥”
इति योगप्रदीपिकायां उमामाहेश्वरसंवादे छायापुरुषलक्षणं नाम पञ्चमः पटलः ॥ * ॥
“ओम् अस्य श्रीच्छायापुरुषमृत्युञ्जयमन्त्रस्य भैरवऋषिर्बृहद्गायत्री छन्दः छायादेवी देवता ह्रीं बीजं स्वाहा शक्तिः पुरुष इति कीलकं सर्व्वसिद्धिसन्दर्शनसिद्ध्यर्थे जपे विनियोगः । ह्रामित्यादि षडङ्गन्यासः ॥ मायया मायया क्लीँ क्लीँ ह्रीँ माया शिवविश्वार्थ्या क्षवयः ओँ ह्रीँ श्रं श्रां सरस्वति ओँ नमो भगवति भूतशरीरमात्मानमाकाशे दर्शय दर्शय श्रँ श्राँ श्राँ ह्रीँ भैरवाय नमः स्वाहा । इति मन्त्रः ॥
मातृभावे च पुत्रं वा बालभावे च बान्धवम् ।
आत्मानं शिरसोऽभावे सर्व्वाभावे कुलक्षयम् ॥
विशीर्णे विष्टते धृते कुम्भे धूमे च विज्वरम् ।
दुर्भिक्षं जायते घोरं कज्जले च पराङ्मुखे ॥
संपूर्णे च सुखे लब्धे क्षेमलाभं सुखिह्नये ।
ह्रीने रक्ते जये प्रीते उग्रे मृत्युर्न संशयः ॥
पतिभीतिं प्रक्षालमिति वेदविदो विदुः ।
मृत्युञ्जयं यमनेव प्राणिस्तस्य विधीयते ॥
षण्मासे मरणं तस्य शीर्षाद्यपचये विदुः ॥
अथ मृत्युञ्जययन्त्रम् ।
“प्रथमं प्रणवमालिख्य तन्मध्ये साध्यनामकम् ।
बहिरष्टदलं पद्मं यान्तानां वसुपत्रके ॥
विलिखेत् सहकारञ्च केशरेषु सुशोभितम् ।
तद्बहिश्चक्रदलं स्यात् षोड़शाक्षरकं लिखेत् ॥
द्वारं भूपुरमालिख्य चतुर्द्वारञ्च सायकम् ।
पार्थिवञ्च चतुष्कोणं चक्रं मृत्युञ्जयं भवेत् ॥
ज्वरादिसर्व्वरोगादिदाहशान्तिकरं परम् ।
मृत्युञ्जयं महायन्त्रं सर्व्वरक्षाकरं शृणाम् ॥”
अथ ध्यानम् ।
“चन्द्रार्काग्निविलोचनं स्मितमुखं पद्मद्वयान्तःस्थितं
मुद्रापाशमृगाक्षसूत्रविलसत्पाणिं हिमांशुप्रभम् ।
कोटीरेन्दुगलत्सुधाप्लुततनुं हारादिभूषोज्ज्वलं
कान्त्या विश्वविमोहनं पशुपतिं मृत्युञ्जयं भावयेत् ॥ * ॥
नत्वा तातगुरुं शिवं प्रजपतिं मन्त्रं जपेत् सर्व्वदा ।
खे लक्षेत् सततं विलोकनपरं मुक्तो दशौ प्रत्यहम् ॥
खे विलोकनमन्त्रस्तु ।
ओँ ह्रीँ भूचरी खेचरी आत्मानमाकाशे दर्शय सर्व्वतत्त्वानां कथय कथय हुं फट् स्वाहा ।
यः पश्येत् सर्व्वगं शान्तमात्मानं सत्यमद्वयम् ।
न तेन किञ्चिद्ज्ञातव्यं ज्ञातव्यं नावशिष्यते ॥”
इति योगप्रदीपिकायां छायापुरुषोपदेशो नाम षष्ठः पटलः ॥

**छायाव्यवहारः**, पुं, ज्योतिःशास्त्रोक्ताङ्कविशेषः । अथ छायाव्यवहारे करणसूत्रं वृत्तम् ।
“छाययोः कर्णयोरन्तरे ये तयो-
र्वर्गविश्लेषभक्ता रसाद्रीषवः ।
सैकलब्धेः पदघ्नन्तु कर्णान्तरं
भान्तरेणोनयुक्तं दले स्तः प्रभे ॥
उदाहरणम् ।
नन्दचन्द्रैर्मितं छाययोरन्तरं
कर्णयोरन्तरं विश्वतुल्यं ययोः ।
ते प्रभे वक्ति यो युक्तिमान् वेत्त्यसौ
व्यक्तमव्यक्तयुक्तं हि मन्येऽखिलम् ॥
न्यासः

कं $\frac{२५}{२}$  शङ्कुः १२  कं $\frac{५१}{२}$

छा $\frac{७}{२}$  छाया $\frac{४५}{२}$

छायान्तरम् । १९ । कर्णान्तरम् । १३ । अनयोर्वर्गान्तरेण । १९२ । भक्ता रसाद्रीषवः । ५७६ । लब्धम् । ३ । सैकस्यास्य । ४ । मूलम् । २ । अनेन कर्णान्तरम् । १३ । गुणितम् । २६ । द्विस्थम् । २६ । भान्तरेण । १९ । ऊनयुते । ७ । ४५ । तदर्द्धे जाते छाये $\frac{७}{२}$ $\frac{४५}{२}$ तत्छायो-र्योगपदमित्यादिना जातौ कर्णौ $\frac{२५}{२}$ $\frac{५१}{२}$

छायान्तरे करणसूत्रं वृत्तार्द्धम् ।
शङ्कुः प्रदीपतलशङ्कुतलान्तरघ्न-
श्छाया भवेद्विनरदीपशिखौच्च्यभक्तः ।
उदाहरणम् ।
शङ्कुप्रदीपान्तरभूस्त्रिहस्ता
दीपोच्छ्रितिः सार्द्धकरत्रया चेत् ।
शङ्कोस्तदार्काङ्गुलसम्मितस्य
तस्य प्रभा स्यात् कियती वदाशु ॥
न्यासः

दीपोच्छ्रितिः $\frac{७}{२}$  शङ्कुः $\frac{१}{२}$

भूः ३ छाया $\frac{१}{२}$ शङ्कुः $\frac{१}{२}$ प्रदीपशङ्कुतलान्तरम् ३

अनयोर्घातः $\frac{३}{२}$ विनरदीपशिखौच्च्येन । ३ । भक्तो लब्धानि छायाङ्गुलानि । १२ ।
अथ दीपोच्छ्रित्यानयनाय करणसूत्रं वृत्तार्द्धम् ।
छायाहृते तु नरदीपतलान्तरघ्ने
शङ्कौ भवेन्नरयुते खलु दीपकौच्च्यम् ।
उदाहरणम् ।
प्रदीपशङ्क्वन्तरभूस्त्रिहस्ता
छायाङ्गुलैः षोड़शभिः समा चेत् ।
दीपोच्छ्रितिः स्यात् कियती वदाशु
प्रदीपशङ्क्वन्तरमुच्यतां मे ॥
न्यासः

शङ्कुः $\frac{१}{२}$

भूः ३ छाया $\frac{२}{३}$

शङ्कुः । १२ । छायाङ्गुलानि । १६ । शङ्कुप्रदीपान्तरहस्ताः । ३ । लब्धं दीपकौच्च्य हस्ताः $\frac{११}{४}$

प्रदीपशङ्क्वन्तरभूमानानयनाय करणसूत्रं वृत्तार्द्धम् ।
विशङ्कुदीपोच्छ्रयसंगुणा भा
शङ्कूद्धृता दीपनरान्तरं स्यात् ॥
उदाहरणम् । पूर्व्वोक्त एव दीपोच्छ्रायः $\frac{११}{४}$
शङ्क्वङ्गुलानि । १२ । छाया । १६ । लब्धाः शङ्कुप्रदीपान्तरहस्ताः । ३ ।
छायाप्रदीपान्तरदीपौच्च्यानयनाय करणसूत्रं सार्द्धवृत्तम् ।
छायाग्रयोरन्तरसंगुणाभा
छायाप्रमाणान्तरहृद्भवेद्भूः ।

"छिन्ने मनुषि देवेशि तथा शक्तिमथाहृदे ॥"॥

मन्त्रविशेषे, पुं। तल्लक्षणादिकं यथा, विश्वसारे।

"मन्त्रोऽमुकादिमध्यान्तेष्वादिमं बीजमुच्यते।
संयुक्तं वा वियुक्तं वा स्वराकान्तस्तथा पुनः ॥
चतुर्धा पञ्चधा वापि स मन्त्रश्छिन्नसंज्ञकः ॥")

छिन्नपत्त्रिका, स्त्री, (छिन्ना पत्त्रिणी। संज्ञायां कन् ततष्टाप् पूर्व्वह्रस्वश्च।) चिरपत्त्रिका। इति राजनिर्घण्टः॥

छिन्नपर्णी, स्त्री, (छिन्नं पर्णं यस्याः। स्त्रियां ङीष्।) अम्बष्ठा। इति राजनिर्घण्टः॥ (विवरणमस्या अम्बष्ठाशब्दे ज्ञेयम्॥)

छिन्नमस्ता, स्त्री, (छिन्नं मस्तं शिरो यस्याः।) दशमहाविद्यान्तर्गतषष्ठमहाविद्या। सा च प्रचण्डचण्डिका। यथा,—

"प्रचण्डचण्डिकां वक्ष्ये सर्व्वकामफलप्रदाम्।
यस्याः प्रसादमात्रेण सदाशिवो भवेन्नरः॥
अपुत्रो लभते पुत्रं अधनो धनवान् भवेत्।
कवित्वञ्च सुपाण्डित्यं लभते नात्र संशयः॥"

अथ प्रचण्डचण्डिकामन्त्रः। विश्वसारे नामतन्त्रे च।

"लक्ष्मीं लज्जां ततो मायां मायां द्वादशिकामपि।
वज्रवैरोचनीये द्वे माये फट्स्वाहया युतः॥
लक्ष्मीबीजं यदाद्यं स्यात् तदा श्रीः सर्व्वतोमुखी।
लज्जाबीजेन चाद्येन वश्यताम्यान्ति योषितः॥
मायाबीजेन चाद्येन महापातकनाशनम्।
मायां द्वादशिकां बीजमाद्यं स्यान्मुक्तिदायकम्॥
भैरवोऽस्य ऋषिर्देवि! सम्राट् छन्द उदीरितम्।
छिन्नमस्ता स्मृता देवी बीजं कूर्च्चद्वयं पुनः॥
स्वाहा शक्तिरभीष्टार्थे विनियोग उदाहृतः॥"

"अत्र लज्जापदं कामबीजपरम्। तथा च।
अत्र लज्जापदे देवि! कामबीजं वितन्यते।
महाकालमतं ज्ञेयं मन्त्रोद्धारं शुभावहम्॥"

पूर्व्वमायापदे इति पाठे मायायाः पूर्व्वं लज्जाबीजं तन्त्रिभिरर्थः। तथा च। पूर्व्वमायापदेन लज्जाबीजमुच्यते। अन्यथा तान्त्रिकादिविरोधः। तथा च।

"कामाद्यो वाग्भवाद्यो वा मायाद्यो वा जपेत् सुधीः।
लज्जाद्यो वा जपेद्विद्यां चतुर्व्वर्गफलप्रदाम्॥
अर्थोवाच सुनीनां मते सर्व्वत्र मायापदं कूर्च्चपरम्। तत्रैव।

वाग्मं वह्निसमायुक्तं रतिबिन्दुसमन्वितम्।
लक्ष्मीबीजमिदं प्रोक्तं सर्व्वकामार्थसिद्धये॥
वामाक्षिवह्निसंयुक्तं बिन्दुनादविभूषितम्।
शिवबीजं महेशानि! लज्जाबीजमुदाहृतम्॥

देशानमुद्धृत्य पुरादिबीजं
सबिन्दुकं नादविभूषितञ्च।
स्वामकर्णं पठितः प्रकल्प्य
मायां वदन्तीह मनीषिवर्गाः॥

द्वादशस्वरवर्णं स्यात् नादबिन्दुविभूषितम्।
वाग्भवं बीजमित्युक्तं सर्व्वसाध्यविमुक्तये॥
इति मन्त्रे चतुर्णां जप्यावाख्यानात् अयमु

वर्णबीजः। भैरवमते तु माया मुखमेवार्थेव॥
लक्ष्मीः प्रथमबीजेऽस्मिन् लज्जाबीजे मनोभवः।
तृतीयेऽस्मिन् सदा देवी महापातकनाशिनी॥
चतुर्थे तु मृणालीता मुक्तिविद्याप्रदायिका।
वकारे वरुणः साक्षात् जकारे तु सुराधिपः॥
रेफे कुलाग्रणी देवो वकारे वसुधाधिपः।
ऐकारे त्रिपुरा देवी रेफे त्रिपुरसुन्दरी॥
त्रैलोक्यविजया देवी चदेवीकारसंस्थिता।
चकारे चन्द्रमा देवो नकारे हि विनायकः॥
ईकारे कमला साक्षात् यकारे च सरस्वती।
मायायुग्मे सदा देवी प्रज्ञया यत्र सङ्गता॥
वैखरी चैव फट्कारे स्वाकारे कुसुमायुधः।
हाकारे च रतिस्तिष्ठेदेवं मन्त्रसमुच्चयः॥"

इति चाख्यानाच्च॥*॥

अस्याः पूजाप्रयोगः।

प्रातःकृत्यादिकं कृत्वा मन्त्राचमनं कुर्य्यात्। यथा,—

"लक्ष्मीमायाकूर्च्चबीजैस्त्रिभिः पीत्वाम्बु साधकः।
वाग्भवेनौष्ठौ संमृज्य मायाभ्याम् प्रक्षालयेत्॥
कूर्च्चेन क्षालयेत् पाणी दृभिर्म्मन्त्रैश्च विन्यसेत्।
श्रीमायाकूर्च्चवाक्कामत्रिपुटामन्मथाङ्कैः॥
कामकलाकूर्च्चाभ्याञ्च वक्ष्यमाणाक्षिकर्णकान्।
नाभिहृन्मस्तकं पाणी स्पृष्ट्वा शम्भुर्भवेत् ध्रुवात्॥
आचम्यैव छिन्नमस्तां वत्सरान्तां प्रपद्यति॥
ततः प्राणायामान्तं विधाय षोढान्यासं कुर्य्यात्।
मन्त्रषोढां ततः कुर्य्यात् त्रैलोक्यवश्यकारिणीम्।
श्रीवाक्त्रिपुटायोनिप्रासादप्रणवैस्तथा॥
कालीबधूकूर्च्चैः कामकलाकूर्च्चात्मकैः क्रमात्।
षोडशीमनुवर्णैश्च पृथगष्टादशाक्षरैः॥
एभिर्बीजैर्म्मातृकार्णान् सेतु स्थानेषु विन्यसेत्।
एषा ब्रह्मस्वरूपा हि बीजषोढा प्रकीर्त्तिता॥
अस्याः संस्मरणात् सर्व्वे वशगा भवन्ति हि।
सर्व्वैश्वर्य्ययुतास्ते हि जीवन्मुक्ता इत्याहृतः॥"*॥

तत ऋष्यादिन्यासः।

अस्य मन्त्रस्य भैरव ऋषिः सम्राट् छन्दः छिन्नमस्ता देवता हुँकारद्वयं बीजं स्वाहा शक्तिरभीष्टार्थसिद्धये विनियोगः। यथा, शिरसि भैरवऋषये नमः। मुखे सम्राट्छन्दसे नमः। हृदि छिन्नमस्तायै देवतायै नमः। गुह्ये हूँ हूँ बीजाय नमः। पादयोः स्वाहाशक्तये नमः॥ ततः कराङ्गन्यासौ। ओम् आं अङ्गुष्ठाय हृदयाय स्वाहा। इति कनीयसि। ओम् ईं सुमङ्गाय शिरसे स्वाहा। इति पविमाङ्गुलयोः। ओम् ऊं सुधन्याय शिखायै स्वाहा। इति मध्यमयोः। ओम् ऐं पाप्राय कवचाय स्वाहा। इति तर्ज्जन्योः। ओम् औं अङ्गुष्ठाय नेत्रत्रयाय स्वाहा। इत्यङ्गुष्ठयोः। ओम् अः सुरधारपाहरचायास्त्राय फट्। इति करतलपृष्ठयोः। एवं हृदयादिषु। तदुक्तं भैरवतन्त्रे।

"उच्चरेत् पूर्व्वमाकारं बिन्दुनादिसमस्तकम्।
अङ्गुष्ठाय हृदयायेति स्वाहायुक्तं कनीयसि॥

ईंकारञ्च ततो देवि! चन्द्रकोटिसमप्रभम्।
सुमङ्गाय ततो वाच्यं शिरसे तदनन्तरम्॥
स्वाहायुक्तं ततो वाच्यं पविमाङ्गुलिसंयुतम्।
ऊकारञ्च ततो वाच्यं बिन्दुनादिसमस्तकम्॥
सुधन्याय ततो वाच्यं शिखायै तदनन्तरम्।
स्वाहान्तं मध्यमायाञ्च विन्यसेत्तदनन्तरम्॥
मायां द्वादशिकां देवीं विन्यसेच्च ततः परम्।
पाप्रायेति समुच्चार्य्य प्रवदेत् कवचाय च॥
स्वाहान्तं विन्यसेन्मन्त्रं तर्ज्जन्यां तदनन्तरम्।
औङ्कारञ्च ततो देवि! चाङ्गुष्ठं तदनन्तरम्॥
नेत्रत्रयाय स्वाहान्तमङ्गुष्ठे करयोर्द्वयोः।
अःकारञ्च विसर्गान्तं सुरधारचसंयुतम्॥
अहुरचायसंयुक्तं अस्त्रायेति ततः परम्।
फट्स्वरसमायुक्तं विन्यसेत् करयोर्द्वयोः॥
हृदि मूर्द्ध्नि शिखायाञ्च कवचे नेत्रमध्यके।
यावदस्त्रं चतुर्दिक्षु विदिक्षु च यथाक्रमम्॥"

विश्वसारे तन्त्रे भैरववाक्यम्।

"उच्चरेत् प्रथमं पूर्व्वमाकारं बिन्दुसंयुतम्।"

इत्यादिवाक्यात् कराङ्गेषु प्रणवसम्बलितो न्यासः। ततो मूलेन मस्तकादिपादपर्य्यन्तं पादादिमस्तकपर्य्यन्तं वारत्रयं न्यसेत्॥*॥

ततो ध्यानम्।

"स्वनाभौ नीरजं ध्यायेदर्द्धं विकसितं सितम्।
तत्पद्मकोषमध्ये तु मण्डलं चण्डरोचिषः॥
जवाकुसुमसङ्काशं रक्तबन्धूकसन्निभम्।
रजःसत्त्वतमोरेखायोनिमण्डलमण्डितम्॥
मध्ये तु तां महादेवीं सूर्य्यकोटिसमप्रभाम्।
छिन्नमस्तां करे वामे धारयन्तीं स्वमस्तकम्॥
प्रसारितमुखीं देवीं लेलिहानाग्रजिह्विकाम्।
पिबन्तीं रौधिरीं धारां निजकण्ठविनिर्गताम्॥
विकीर्णकेशपाशाञ्च नानापुष्पसमन्विताम्।
दक्षिणे च करे कर्त्रीं मुण्डमालाविभूषिताम्॥
दिगम्बरीं महाघोरां प्रत्यालीढपदे स्थिताम्।
अस्थिमालाधरां देवीं नागयज्ञोपवीतिनीम्॥
रतिकामोपरिस्थाञ्च सदा ध्यायन्ति मन्त्रिणः।
सदा षोडशवर्षीयां पीनोन्नतपयोधराम्॥
विपरीतरतासक्तौ ध्यायेद्रतिमनोभवौ।
डाकिनीवर्णिनीयुक्तां वामदक्षिणयोगतः॥
देवीगलोच्छलद्रक्तधारापानं प्रकुर्व्वतीम्।
वर्णिनीं लोहितां सौम्यां मुक्तकेशीं दिगम्बरीम्।
कपालकर्त्तृकाहस्तां वामदक्षिणयोगतः।
नागयज्ञोपवीताढ्यां ज्वलत्तेजोमयीमिव॥
प्रत्यालीढपदां दिव्यां नानालङ्कारभूषिताम्।
सदा द्वादशवर्षीयामस्थिमालाविभूषिताम्॥
डाकिनीं वामपार्श्वे तु कल्पसूर्य्यानलोपमाम्।
विद्युज्जटां त्रिनयनां दन्तपङ्क्तिबलाकिनीम्॥
दंष्ट्राकरालवदनां पीनोन्नतपयोधराम्।
महादेवीं महाघोरां मुक्तकेशीं दिगम्बरीम्॥
लेलिहानमहाजिह्वां मुण्डमालाविभूषिताम्।
कपालकर्त्तृकाहस्तां वामदक्षिणयोगतः॥
देवीगलोच्छलद्रक्तधारापानं प्रकुर्व्वतीम्।
करस्थितकपालेन भीषणेनातिभीषणाम्॥

वाभ्यां निपिबमानां तां ध्यायेद्देवीं विचक्षणः ॥”
ध्यानस्यास्याक्षकत्वमाह । तत्रैव ।
“प्रचण्डचण्डिकामेवमध्यात्वा यस्तु पूजयेत् ।
तस्य स्वस्य शिरश्छित्त्वा देवी पिबति शोणितम् ॥”
पिबन्तीमिति तेन मुखेनेति शेषः ।
तथा च ।
“स्वमस्तकं वरखर्परं रक्तधाराभिपूरितम् ।
लसज्जिह्वं महाभीमं धृतं वामकरे तथा ॥”
इति भैरवतन्त्रे ।
तत्रैव ।
“सितं कुर्य्याद्दलं पूर्व्वमाग्नेयं रक्तवर्णकम् ।
याम्यं कृष्णमतः पीतं शुक्लं रक्तं सितासितम् ॥
ततः पीतां प्रकुर्व्वीत कर्णिकां तस्य मध्यगाम् ।
तन्मध्ये तु प्रकुर्व्वीत मण्डलं चतुरोचितः ॥
रजःसत्त्वतमोरेखा रक्ता शुक्लासिता क्रमात् ।
मायायुक्तं ततो न्यस्य षडस्रसमन्वितम् ॥
बाह्ये तस्य च चक्रस्य कुर्य्यात् प्राकारवेष्टितम् ।
पूर्व्वं रक्तं ततः कृष्णं सितं पीतं यथाक्रमम् ॥
चतुर्द्वारसमायुक्तं त्रिशूलैरधिष्ठितम् ॥”
इत्यस्याः पूजायन्त्रम् ॥ * ॥
यथा वा ।
“त्रिकोणं विन्यसेदादौ तन्मध्ये मण्डलत्रयम् ।
तन्मध्ये विन्यसेद्योनिं द्वारत्रयसमन्विताम् ॥
बहिरष्टदलं पद्मं भूबिम्बत्रितयं पुनः ।
कूर्च्चबीजं लिखेन्मध्ये त्रिकोणे फट् समन्वितम् ॥”
यद्वा शक्तिसारोक्तं यन्त्रम् ।
तथाच ।
“अपरञ्च प्रवक्ष्यामि शृणु देवि ! यथाक्रमम् ।
स्वनाभौ नीरजं ध्यायेद्भानुमण्डलसन्निभम् ॥
योनिचक्रसमायुक्तं गुणत्रितयसंस्थितम् ।
तत्र मध्ये महादेवीं छिन्नमस्तां स्मरेद्यतिः ॥
प्रदीपकलिकाकारामद्वितीयव्यवस्थिताम् ।
योगिमुद्रासमायुक्तां हृदयस्थितलोचनाम् ॥
धेयमेतद्यतीनाञ्च गृहस्थानां निशामय ॥”
यथा,—
“स्वनाभौ नीरजं ध्यायेद्बालार्कसमप्रभाम् ।
निर्लेपां निर्गुणां कृष्णां बालचन्द्रसमप्रभाम् ॥
समाधिमात्रगम्याञ्च गुणत्रितयवेष्टिताम् ।
कलातीतां गुणातीतां मुक्तिमात्रप्रदायिनीम् ॥”
एवं ध्यात्वा मानसैः संपूज्य तारिणीवच्छङ्ख-
स्थापनं कुर्य्यात् । ततः पीठपूजा । आधारश-
क्तये । प्रकृतये । कूर्म्माय । अनन्ताय । पृथिव्यै ।
क्षीरसमुद्राय । श्वेतद्वीपाय । कल्पवृक्षाय । तदधः
स्वर्णसिंहासनाय । आनन्दकन्दाय । सवि-
त्मकाय । सर्व्वतत्त्वात्मकपद्माय । सं सत्त्वाय ।
रं रजसे । तं तमसे । आं आत्मने । अं अन्त-
रात्मने । पं परमात्मने । ह्रीं ज्ञानात्मने नमः ।
मध्ये रतिकामाभ्याम् ॥ भैरवमते तु ।
शक्तिं कुर्य्यात्तु नागराजमतःपरम् ।
पूजयेत्तत्त्वविस्तरः ॥
रजः सर्व्वं तमस्तथा ।
पूज्य शक्तिपूजां समाचरेदिति ॥

रतिकामोपरि वज्रवैरोचनीये देहि देहि
एहि एहि गृह्ण गृह्ण मम सिद्धिं देहि देहि
मम शत्रून् मारय मारय करालिके हूँ फट्
स्वाहेति पीठमन्त्रः ॥ सर्व्वत्र प्रणवादिनमो-
ऽन्तेन पूजयेत् । पुनर्ध्यात्वावाहयेत् । सर्व्व-
सिद्धिवर्णनीये सर्व्वसिद्धिडाकिनीये वज्रवैरोच-
नीये इहावह इहावह पुनरावहनमुद्रां च इह
तिष्ठ इह तिष्ठ इह सन्निधेहि इह सन्निरुध्यस्व
इत्यनेनावाह्य आं ह्रीं क्रों यं रं लं वं शं षं सं हं सः इत्यनेन प्राण-
प्रतिष्ठां कृत्वा । ओम् आं खड्गाय हृदयाय
स्वाहा इत्यादिना षडङ्गं विन्यस्य यथाशक्ति
पूजां कृत्वा बलिं दद्यात् । यथा । वज्रवैरो-
चनीये देहि देहि एहि एहि गृह्ण गृह्ण इमं
बलिं मम सिद्धिं देहि देहि मम शत्रून् मारय
मारय करालिके हूँ फट् स्वाहा इति मन्त्रेण ।
ततो देव्या दक्षिणे ओँ वर्णिन्यै नमः । वामे
ओँ डाकिन्यै नमः । ततो देव्यङ्गे षडङ्गं
संपूज्य दक्षिणे ओँ शङ्खनिधये नमः । वामे
ओँ पद्मनिधये नमः । पूर्व्वादिदिक्षु लक्ष्मीं
लज्जां मायां वाणीञ्च पूजयेत् । विदिक्षु ब्रह्म-
विष्णुरुद्रेश्वरान् मध्ये सदाशिवं सर्व्वत्र प्रणवादि
नमोऽन्तेन पूजयेत् । ततः पञ्च पुष्पाञ्जलिं
दत्त्वा आवरणानि पूजयेत् । अग्नीशासुरवायुषु
मध्ये दिक्षु च ओम् आं खड्गाय हृदयाय
स्वाहा इत्यादिना षडङ्गानि संपूज्य अष्टपत्रेषु
पूर्व्वादिक्रमेण ओम् ह्रीं काल्यै नमः एवं वर्णिन्यै
डाकिन्यै भैरव्यै महाभैरव्यै इन्द्राण्यै पिङ्गाक्ष्यै
संहारिण्यै सर्व्वत्र प्रणवादिनमोऽन्तेन पूजयेत् ।
यथा,—
“एकां नामाभिधां कालीं वर्णिनीं डाकिनीं तथा ।
भैरवीञ्च महापूर्व्वां भैरवीं तदनन्तरम् ॥
इन्द्राणीञ्च सपिङ्गाक्षीं ततः संहारकारिणीम् ।
पूर्व्वादिके दले पूज्याः शक्तयश्च यथाक्रमम् ॥
प्रणवादिनमोऽन्तेन सर्व्वासीनं समुच्चरन् ॥”
पद्ममध्ये हूँ हूँ फट् नमः स्वाहा नमः ।
देव्या दक्षिणे सम्राट्छन्दसे नमः । देव्या
उत्तरे सर्व्वदेवेभ्यो नमः । पुनर्दक्षिणे ओं बीज-
शक्तिभ्यो नमः । पत्राग्रेषु पूर्व्वादिक्रमेण ब्राह्म्यै
माहेश्वर्य्यै कौमार्य्यै वैष्णव्यै वाराह्यै इन्द्राण्यै
चामुण्डायै महालक्ष्म्यै सर्व्वत्र प्रणवादिनमो-
ऽन्तेन पूजयेत् । ततश्चतुर्द्दिक्षु द्वारेषु ओम्
करालाय नमः । विकरालाय नमः । एवं अति-
करालाय महाकरालाय । यथा, भैरवीये ।
“पूर्व्वद्वारे करालञ्च विकरालञ्च दक्षिणे ।
पश्चिमेऽतिकरालञ्च महाकरालमुत्तरे ॥”
ततो धूपादिविसर्ज्जनान्तं कर्म्म समापयेत् ।
विसर्ज्जने त्वयं विशेषः । संहारमुद्रां प्रदर्श्य
अङ्गमावारोप्य वामनासापुटेन ।
योगिमुद्रासमारूढां प्रदीपकलिकोज्ज्वलाम् ।
कण्ठमध्ये विशुध्येत क्रमेण नीयतां गताम् ॥
इमं मन्त्रं समुच्चार्य्य चक्ररश्मौ निवेशयेत् ।
उत्तरे शिखरे इत्यादि । अथ पुरश्चरणं अस्य-

जपः । सिद्धविद्यात्वात् ॥ * ॥ बलिदाने तु
भैरवीये ।
“रात्रौ बलिः प्रदातव्यो मत्स्यमांससुरादिभिः ।
अथवा मधुपानाद्यैर्मधुरैर्विभवक्रमैः ॥
मन्त्रस्तु ।
उच्चरेत् प्रणवं पूर्व्वं सर्व्वसिद्धिप्रदेऽन्वितम् ।
वर्णिनीये ततो वाच्यं सर्व्वसिद्धिप्रदे ततः ॥
डाकिनीये ततो वाच्यं देवीनाम ततः परम् ।
वज्रेहीति ततो वाच्यं इमं बलिमनन्तरम् ॥
गृह्ण गृह्ण ततः प्रोक्ता मम सिद्धिमनन्तरम् ।
देहि देहीति मायां च ततः फट्स्वाहया युतः ॥
बलिमन्त्रः समाख्यातः पूजितोऽयं सुरेश्वरीति ॥
मन्त्रान्तरम् ।
भुवनेशी कामबीजं कूर्च्चबीजञ्च वाग्भवम् ।
भुवनेशी कूर्च्चबीजं वाग्भवं तदनन्तरम् ॥
वज्रवैरोचनीये च हूं फट् स्वाहा ततः परम् ॥
अस्य पूजाप्रयोगध्यानपूजादिकं पूर्व्ववत्
कार्य्यम् ॥ * ॥
कृत्वा मादनं लक्ष्मीर्व्वाग्भवं कूर्च्चमेव च ।
अष्टान्ता छिन्नमस्ताया महाविद्या प्रकीर्त्तिता ॥
अस्यापि सदृशी विद्या जगत्स्वपि न विद्यते ।
षड्वर्णोऽयं मन्त्रः साध्याक्षोदरो नाम संज्ञय ॥
अस्या ध्यानमहं वक्ष्ये शृणुष्व कमलानने ! ।
प्रत्यालीढपदां सदैव दधतीं छिन्नं शिरः कर्त्तृकां
दिग्वस्त्रां स्वकबन्धशोणितसुधाधारां पिबन्तीं मुदा ।
नागाबद्धशिरोमणिं त्रिनयनां हृद्युत्पलालङ्कृतां
रत्यासक्तमनोभवोपरिदृढां ध्यायेज्जवासन्निभाम् ॥
दक्षे चातिसिता विमुक्तचिकुरा कर्त्रीं तथा खर्परं
हस्ताभ्यां दधती रजोगुणभवा नाम्नापि सा वर्णिनी ।
देव्याश्छिन्नकबन्धतः पतदसृग्धारां पिबन्ती मुदा
नागाबद्धशिरोमणिर्मनुविदा ध्येया सदा सा सुरैः ॥
वामे कृष्णतनुस्तथैव दधती खड्गं तथा खर्परं
प्रत्यालीढपदा कबन्धविगलद्रक्तं पिबन्ती मुदा ।
सैषा या प्रलये समस्तभुवनं भोक्तुं क्षमा तामसी
शक्तिः सापि परात्परा भगवती नाम्ना परा डाकिनी ॥
इति ध्यानम् ।
अस्याः पूजादिकं सर्व्वं पीठपूर्व्ववत् कार्य्यम् ॥ * ॥
मन्त्रान्तरम् ।
तारं लज्जाद्वयं वज्रवैरोचनीये हूं फट् स्वाहा ।
अस्यापि ध्यानपूजादिकं सर्व्वं पीठपूर्व्ववत् ॥ * ॥
वियद्वह्निसमायुक्तं विन्दुनादयुतं ततः प्रिये ! ।
एकाक्षरी महाविद्या त्रैलोक्यवशकारिणी ॥
वर्णं दीर्घं क्षकारः ॥
ठठान्तेयं महाविद्या त्रैलोक्यमोहकारिणी ।
ताराद्यन्ता भवतीयं चतुर्व्वर्गैकप्रदा ॥ * ॥

मन्त्रान्तरं यथा,—
वज्रवैरोचनीये च हूंहूं फट्‌ठठः ।
तारादेषा महाविद्या सर्व्वतेजोऽपहारिणी ॥
त्रैलोक्याकर्षिणी विद्या चतुर्व्वर्गफलप्रदा ।
ध्यानपूजादिकं सर्व्वं षोड़शीवत् समाचरेत् ॥*॥
इदानीं षोड़शीविद्यामपरां शृणु ।
तथा सर्व्वप्रयत्नेन सर्व्वापाख्या च षोड़शी ।
लक्ष्मीबीजादिका चैव सर्व्वैश्वर्य्यप्रदायिनी ॥
लज्जाद्या सर्व्वभूतानामैश्वर्य्याकर्षिणी परा ।
कूर्च्चाद्या सर्व्वमन्त्राणां महापातकनाशिनी ॥
वाग्भवाद्या यदा देवी वाक्सिद्धिप्रदायिनी ।
एषा तु षोड़शीविद्या चैषा सप्तदशाक्षरी ॥
श्रीबीजपुटिता या तु कर्म्मोद्धारकरी सदा ।
लज्जया पुटिता विद्या त्रैलोक्याकर्षिणी परा ॥
कूर्च्चेन पुटिता सर्व्वपापविनाशिनी पापहारिणी ।
वाग्बीजपुटिता चैषा वाक्सिद्धिप्रदायिनी ॥
चतुर्व्विधेति विज्ञेया प्रिये । सप्तदशाक्षरी ।
ताराद्या षोड़शी चाद्या भवेत् सप्तदशाक्षरी ।
एषा विद्या महाविद्या भुक्तिमुक्तिकरी सदा ।
कमला भुवनेशानी कूर्च्चबीजं सरस्वती ॥
वज्रवैरोचनीये च पूर्व्वबीजानि चोच्चरेत् ।
फट् स्वाहा च महाविद्या बहुचक्राक्षरी परा ।
ताराद्येकोनविंशार्णा महाविद्यास्वरूपिणी ।
एते विद्योत्तमे देवि ! भुक्तिमुक्तिप्रदे शुभे ॥ * ॥
लज्जादिपुटिता पूर्व्वा रन्ध्रचन्द्राक्षरी भवेत् ।
चतुर्थी च महाविद्या चतुर्व्वर्गफलप्रदा ॥
प्रणवाद्या यदा चैषा भोगमोक्षकरी सदा ।*।
विद्यान्तरं प्रवक्ष्यामि सावधानावधारय ।
हृल्लेखाकूर्च्चवाग्बीजवज्रवैरोचनीये हूं ॥
फट्‌कं स्वाहा महाविद्या चतुर्द्दशाक्षरी मता ।
सर्व्वैश्वर्य्यप्रदा चैषा सर्व्वसंमोहकारिणी ॥*॥
भुवनेशी त्रितत्त्वञ्च वाग्बीजं प्रणवं ततः ।
वज्रवैरोचनीये च फट् स्वाहा च तथापरा ॥
चतुर्द्दशाक्षरी चैषा चतुर्व्वर्गफलप्रदा ।
एषा विद्या महाविद्या जन्ममृत्युविनाशिनी ॥*॥
तन्त्रान्तरे ।
रमा कामस्तथा लज्जा वाग्भवं वज्र वै पदम् ।
रोचनीये लज्जायुग्ममन्तं स्वाहासमन्वितम् ॥
इयं सा षोड़शी प्रोक्ता सर्व्वकामफलप्रदा ।
कथिताः सकला विद्याः सारात्सारतराः शुभाः ॥
आसां ऋषिर्भैरवोऽयं नाम्ना तु क्रोधभूपतिः ।
सम्राट् छन्दो देवता च छिन्नमस्ता प्रकीर्त्तिता ।
षड्दीर्घभाक्स्वरेणैव प्रणवाद्येन सुन्दरि ! ।
षड्‌गाद्येन ठठान्तानि षड़ङ्गानि प्रकल्पयेत् ॥
नादिदोषादिकं चासां ताः सिद्धाः सुरासुरैः ।
सकलेषु च वर्णेषु सकलेष्वाश्रमेषु च ॥
वर्णितेषु च वर्णेषु भुक्तिमुक्तिप्रदायिका ।
प्रणवाद्याश्च या विद्या शूद्रादौ च वर्जिताः ॥
अज्ञानेन विधिवोऽयं योषिच्चेत् समुपाचरेत् ।
डाकिनी सा भवत्येव डाकिनीभिः प्रजायते ॥
पतिहीना पुत्त्रहीना यथा स्यात् विषयोगिनी ।
इति ते कथितं तत्त्वं रहस्यमखिलं प्रिये ! ।
अतिगोप्यतरं ह्येतत् न प्रकाश्यं कदाचन प्रिये ! ।
एतासां ध्यानपूजादिकं षोड़शीवत् कार्य्यम् ॥*॥
नाभौ शुभ्रारविन्दं तदुपरि विमलं मण्डलं चण्ड-
रश्मेः
संसारस्यैकसारां त्रिभुवनजननीं धर्म्म-
कामार्थदात्रीम् ।
तस्मिन् मध्ये त्रिमार्गे त्रितयतनुधरां छिन्नमस्तां
प्रशस्तां
तां वन्दे ज्ञानरूपां मरणभयहरां योगिनीं
योगमुद्राम् ॥”
इति छिन्नमस्ताप्रकरणम् । इति तन्त्रसारः ॥
छिन्नरुहः, पुं, ( छिन्नोऽपि रोहतीति । रुह+
“इगुपधज्ञेति ।” ३ । १ । १३५ । इति कः । )
तिलकवृक्षः । इति राजनिर्घण्टः ॥
छिन्नरुहा, स्त्री, ( छिन्ना सत्यपि रोहतीति । रुह
+कः । अजादित्वात् टाप् । ) गुडूची । इत्य-
मरः । २ । ४ । ८२ ॥ (यथास्याः पर्य्यायाः ।
“वत्सादनी छिन्नरुहा मधुपर्ण्यमृतामरा ।
कुण्डलामृतवल्ली च गुडूची चक्रलक्षणा ॥”
इति वैद्यकरत्नमालायाम् ॥)
स्वर्णकेतकी । शल्लकी । इति राजनिर्घण्टः ॥
छिन्नवेशिका, स्त्री, (छिन्नो विच्छिन्नो वेशो यस्याः ।
संज्ञायां कन् । ततष्टापि अत इत्वम् ।) पाठा ।
इति शब्दचन्द्रिका । आकनादी इति भाषा ॥
छिन्ना, स्त्री, (छिद्यतेऽसौ । छिद्+क्त । “अजा-
द्यतष्टाप् ।”४।१।४। इति टाप् ।) गुडूची । (यथा,
भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ।
“गुडूची मधुपर्णी स्यादमृतामृतवल्लरी ।
छिन्ना छिन्नरुहा छिन्नोद्भवा वत्सादनीति च ॥”
छिद्यते कुलात् बहिष्क्रियते इति । ) पुंश्चली ।
इति विश्वः ॥
छिन्नोद्भवा, स्त्री, ( छिन्ना विभिन्ना सत्यपि उद्भवति
पुनर्जायते इति । उत्+भू+अच् । यद्वा,
छिन्ने छेदनेऽपि उद्भव उत्पत्तिर्यस्याः । )
गुडूची । इति राजनिर्घण्टः ॥ (गुडूचीशब्देऽस्या
विवृतिर्ज्ञेया ॥)
छिलिहिण्टः, पुं, ( चिक्कणा वलनशालिरूपतया
हिण्डते अवज्ञायते इति । हिण्ड अनादरे+
अच् । पृषोदरादित्वात् चस्य छः । ) पाताल-
गरुड़वृक्षः । इति भावप्रकाशः ॥
छुछुन्दरी, स्त्री, ( छुछुमित्यव्यक्तशब्दो दीर्य्यते
निर्गच्छत्यस्याः । दॄ+“सर्व्वधातुभ्य इन् ।” उणां
४ । ११७ । इति इन् । ततः कृदिकारादिति
ङीष् । ) जन्तुविशेषः । छुँचा इति भाषा । तत्-
पर्य्यायः । गन्धमूषा २ । इति हेमचन्द्रः । ४ ।
३६० ॥ चिका ३ वैष्णवकूमः ४ गुड़ा ५ गन्ध-
मूषिका ६ । इति त्रिकाण्डशेषः । गन्धमूषिका ७ ।
इति शब्दार्णवः । राजपुत्त्री ८ प्रतिगन्धिका ९
सुगन्धमूषिका १० गन्धशुण्डिनी ११ सूचि-
मुखिका १२ । इति राजनिर्घण्टः ॥ मण्डूकः १३
गन्धमूषः १४ छुछुः १५ । इति शब्दावली ।
(छुछुन्दरिः १६ । इति मार्कण्डेयपुराणम् ।१५।२१॥
“अभ्यङ्गार्थमानयेत् चिप्रं यक्षमातां छुछुन्दरीम् ।
छुछुन्दर्य्या विपक्वन्तु तथा तैलकरं शुभम् ॥”
इति वैद्यकचक्रपाणिसंग्रहे यक्ष्माधिकारे ॥)
छुट, क श्रि छेदे । इति कविकल्पद्रुमः ॥ ( चुरां-
तुदां च-सकं-सेट् । ) क, छोटयति । श्रि,
छुटति । अच्छुटीत् । इति दुर्गादासः ॥
छुद्रं, क्ली, (छद+रक् । पृषोदरादित्वात् उत्वम् ।)
प्रतीकारकम् । रक्षिः । इति संक्षिप्तसारे
उणादिवृत्तिः ॥
छुप, श औ स्पर्शे । इति कविकल्पद्रुमः ॥ ( तुदां-
परं-सकं-अनिट् । ) श, छुपति । औ, छोप्ता ।
इति दुर्गादासः ॥
छुपः, पुं, ( छुप+अच्यर्थे कः । ) क्षुपः । स्पर्शनम् ।
इति मेदिनी । पे, ६ ॥ चपलः । युद्धम् ।
इति विश्वः ॥
छुर, छेदे । इति कविकल्पद्रुमः ॥ ( भ्वां-परं-
सकं-सेट् । छोरति । अच्छोरीत् ॥ )
छुर, श्रि लेपे । इति कविकल्पद्रुमः । (तुदां-परं-
सकं सेट् । ) श्रि, छुरति, अच्छुरीत् छुच्छोर ।
लेपश्छेदः । इति दुर्गादासः ॥
छुरा, स्त्री, ( छुरति रञ्जयति नाशयति दुर्बला-
दिकमिति वा । छुर+कः टाप् च । ) सुधा ।
चूर्णम् । इति शब्दावली । १६५ ॥
छुरिका, स्त्री, ( छुरति छिनत्तीति । छुर+वुन् ।
यद्वा, छुरी+स्वार्थे कन् । पूर्व्वह्रस्वश्च । )
अस्त्रविशेषः । छुरी इति ख्याता । तत्पर्य्यायः ।
शस्त्री २ असिपुत्त्री ३ असिधेनुका ४ । इत्य-
मरः । २ । ८ । ९२ ॥ छुरी ५ । इति भरतः ॥
क्षुरी ६ छूरी ७ कृपाणिका ८ धेनुपुत्त्री ९ ।
इति हेमचन्द्रः ॥ छूरिका १० । इति शब्द-
रत्नावली ॥ (यथा, कथासरित्सागरे ।२५।१४९ ।
“तावत् विजयमपश्यन्तं छित्वा छुरिकया युवा ।
स्वादन्तौ तस्य मांसानि पुंसः मूलाग्रवर्त्तिनः ॥”)
छुरितं, त्रि, ( छुर+क्तः । ) खचितम् । इति
जटाधरः ॥ ( रञ्जितम् । यथा, माघे ।१।२२।
“परस्परेण च्छुरितामलच्छवी
तदेकवर्णाविव तौ बभूवतुः ॥”)
छिन्नञ्च ॥
छुरी, स्त्री, ( छुरति छिनत्तीति । छुर छेदे+
“इगुपधज्ञेति । ” ३ । १ । १३५ । इति क ।
ततो ङीष् । ) छुरिका । इति भरतः ॥
छूरिकाफली, स्त्री, ( छूरिका इव फलानि यस्याः ।
स्त्रियां ङीष् । ) श्वेता । इति राजनिर्घण्टः ॥
छूरी, स्त्री, ( छुरी+पृषोदरादित्वात् दीर्घः । )
छुरिका । इति हेमचन्द्रः । ३ । ४४८ ॥
छूर, कि सन्दीपे । इति कविकल्पद्रुमः ॥ ( चुरां-
पक्षे भ्वां-परं-सकं-सेट् । ) सन्दीपो दीप्ती-
करणम् । कि, छर्दयति छर्दति दीपं लोकः ।
इति दुर्गादासः ॥
छूर, उ च ष इर् वमने । दिवि । वमने । इति
कविकल्पद्रुमः ॥ (रुधां-उभं-सकं-सेट् । उदित्वात्
क्त्वावेट् । ) उ, छर्दित्वा छूर्त्वा । च ष, छृणत्ति

कृन्ते । रर, अकृदत् अच्छर्दीत् । छेदनं निशीथिच्छायावच्छारस्तुतिद्युतिक्रीडासलय: । इति केचित् । तन्मते तु क्रीडनमेव अन्यथा त्रियो न्यच्छमनर्थकं स्यात् । त्रिषि दीप्तौ । इति दुर्गादास: ॥

छेक:, त्रि, ( छ्यति छगवाशादिसुखं छिनत्ति गाम्यतीति । छो य कूर्णौ + बाहुलकात् छेकन् ।) गृहासक्तपक्षिमृगौ । तत्पर्याय: । छेकक: २ । इत्यमर: । २।६।४४ ॥ नागर: । इति मेदिनी । के, २४ ॥ (शब्दालङ्कारविशेषे, पुं । स तु अनुप्रासभेद: । तल्लक्षणं यथा, साहित्यदर्पणे ।१०।४।
"छेको व्यञ्जनसङ्घस्य सकृत्साम्यमनेकधा ॥"
तदुदाहरणं यथा, तत्रैव,— [अमराग् ।
"आदाय बकुलगन्धानन्धीकुर्व्वन् पदे पदे
भ्रमरानेति मन्दमन्दं कावेरीवारिपावन: पवन: ॥"
अत्र गन्धानन्धीति संयुक्तयो: कावेरीवारीत्यसंयुक्तयो: पावन: पवन इति बहूनां व्यञ्जनानां सकृदावृत्ति: । छेको विदग्धस्तत्प्रयोज्यत्वादेष छेकानुप्राम: ॥")

छेकोक्ति:, स्त्री, ( छेकानां विदग्धानां उक्ति: । ) वक्रोक्ति: । इति जटाधर: ॥ (विशेषस्तु वक्रोक्तिशब्दे ज्ञेय: ॥ )

छेद, त् क छेदे । इति कविकल्पद्रुम: ॥ ( अदन्तचुरा-परं-सकं-सेट् । ) अचिच्छेदत् । इति दुर्गादास: ॥

छेद:, पुं, ( छिद + भावे घञ् । ) छेदनम् । इति हेमचन्द्र: । ६ । ३६ ॥ ( यथा, कुमारे ।२।४१।
"तैनामरवधूहस्तै: सदयालूनपल्लवा: ।
अभिज्ञाश्छेदपातानां क्रियन्ते नन्दनद्रुमा: ॥"
नाश: । अपगति: । यथा, शाकुन्तले २य अङ्के ।
"मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपु: सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयो: ॥" * ॥
छिद्यते इति । छिद् + कर्म्मणि घञ् ।) खण्डम् । इति त्रिकाण्डशेष: ॥ (यथा, कुमारे । १ । ४ ।
"बलाहकच्छेदविभक्तरागा-
मकालसन्ध्यामिव धातुमत्ताम् ॥")

छेदनं, क्ली, (छिद् + भावे ल्युट् ।) अवयव द्विधाकरणम् । तत्पर्याय: । वर्द्धनम् २ । इत्यमर: । ३ । २ । ७ ॥ कर्त्तनम् ३ कल्पनम् ४ छेद: ५ । इति हेमचन्द्र: ॥ ( यथा, मनु: । ११ । १४२ ।
"फलदानान्तु वृक्षाणां छेदने जप्यमृक्शतम् ॥"
नाश: । अपनोदनम् । यथा, महाभारते । ३ । १८५ । २४ ।
"मुक्तेव तु महात्मानौ मुनयोऽप्यप्रवन् द्रुतम् । सनत्कुमारे धर्म्मज्ञे संशयच्छेदनाय वै ॥" * ॥) भेद: । इति मेदिनी । ने, ६५ ॥
(छिनत्तीति । छिद् + ल्यु: । छेदके, त्रि । यथा, महाभारते । २ । ५४ । ८ ।
"प्रच्छन्नो वा प्रकाशो वा योगो योऽरिं प्रबाधते । तद्वै शस्त्रं शस्त्रविदां न शस्त्रं छेदनं स्मृतम् ॥"
तथाच तत्रैव । १ । ३९ । ३ ।
"अनलार्कप्रभं घोरं छेदनं लोमहारिणम् ।
घोररूपं तदत्यर्थं चक्रं देवै: सुनिर्म्मितम् ॥")

छेदनीय:, पुं, ( छेदितुं योग्य: । छिद + "अर्हे कृत्यतृचश्च ।" ३।३।१६९ । इति अनीयर् ।) कतकवृक्ष: । इति राजनिर्घण्ट: ॥ (कतकशब्देऽस्य गुणादयोऽस्य व्याख्याता: ॥) छेद्ये, त्रि ॥ (यथा, सुश्रुते । १ । २७ ।
"अनुत्पन्ना च शस्त्राणि छेदनीयमुखानि च ॥")

छेदि:, त्रि, ( छिनत्तीति । छिद् + "कृपिभिदिभ्य इति ।" उणां ४ । ११८ । इति इन् । ) छेदनकर्त्ता । इत्युणादिकोष: ॥

छेदितं, त्रि, ( छेद त् क छेदे + क्त । ) छिन्नम् । इति हेमचन्द्र: ॥ (यथा, काशीखण्डे ।२८।६२।
"छेदिताखिलपापौघा छद्मघ्नी छलहारिणी ॥")

छेमण्ड:, पुं, ( छमु अदने + बाहुलकात् अण्डन् अत एत्वञ्च । ) पितृहीन: । इत्युणादिवृत्ति: । १ । १२८ । छेमडा इति भाषा ॥

छेमु:, पुं, सोमराजी । इति शब्दचन्द्रिका ॥

छो, य छेदने । इति कविकल्पद्रुम: ॥ ( दिवा-परं-सकं-अनिट् । ) कृमिश्छेद: । य, छ्यति धान्यं लोक: । इति दुर्गादास: ॥

छोटिका, स्त्री, ( छोटति यज्ञविघ्नकारिणो मायां छिनत्तीति । छुट + ण्वुल् । टापि अत इत्वञ्च ।) तर्ज्जन्यङ्गुष्ठाङ्गुलिध्वनि: । यथा, "छोटिकाभिर्दशदिग्बन्धनं कृत्वा भूतशुद्धिं कुर्य्यात् ।" इति तन्त्रसार: ॥

छोटी [ न् ] पुं, ( छुटति नीचजातितया सर्व्वेभ्यो भवतीति । छुट + णिनि: । ) कैवर्त्त: । इति त्रिकाण्डशेष: ॥

छोरणं, क्ली, ( छुर + भावे ल्युट् । ) परित्याग: । इति त्रिकाण्डशेष: ॥ छोड़न इति हिन्दी भाषा ॥

छोलङ्ग:, पुं, ( छुरतीति । छुर + बाहुलकात् अङ्गच् । ततो रस्य लत्वम् । ) मातुलुङ्ग: । इति शब्दरत्नावली ॥ टाबालेबु इति भाषा ॥

छ्यु, ङ गत्याम् । इति कविकल्पद्रुम: ॥ (भ्वा-आत्मं-सकं-सेट् । ) ङ, छ्यवते । इति दुर्गादास: ॥

---

## ज

ज, जकार: । स व्यञ्जनाष्टमवर्ण: । चवर्गस्य तृतीयवर्णश्च । अस्योच्चारणस्थानं तालु । इति व्याकरणम् ॥ (तदुक्तं सिद्धान्तकौमुद्याम् । "इचुयशानां तालु ।" तथाच शिक्षायाम् ।
"कण्ठावहाविचुयशास्तालव्या ओष्ठजावुपू ॥")
अस्योत्पत्तिर्यथा, प्रपञ्चसारे ।
"विसर्गसाङ्गुश: कोणौ शं कवर्गश्च मध्यत: ॥"
(वङ्गाक्षरेण) अस्य लेखनप्रकारो यथा, वर्णोद्धारतन्त्रे ।
"अर्द्धाध:कुञ्चिता रेखा तासु कर्णोर्द्धकेसु: ।
वामदेवी कमला विष्णु शिवा माया प्रकीर्त्तिता ॥"
अस्य स्वरूपं यथा, कामधेनुतन्त्रे ।
"जकारं परमेशानि । या स्वयं मधुकैटभौ ।
शरच्चन्द्रप्रतीकाशं सदा त्रिगुणसंयुतम् ॥
पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा ।
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं प्रिये । ॥"
तस्य ध्यानं यथा, वर्णोद्धारतन्त्रे ।
"ध्यानमस्य: प्रवक्ष्यामि शृणुष्व कमलानने । ।
नानालङ्कारसंयुक्तैर्भुजैर्द्वादशभिर्युताम् ॥
रक्तचन्दनदिग्धाङ्गीं विचित्राम्बरधारिणीम् ।
त्रिलोचनां जगद्धात्रीं वरदां भक्तवत्सलाम् ॥
एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत् ॥"
तस्य पर्य्याया यथा,—
"ज: शूली वामन: शूली भोगदा विजया स्थिरा ।
जलदेवो जयो जेता स्थानकी सुमुखी विभु: ॥
लम्बोदरी स्मृति: शाखा शुभभा कर्णकाधरा ।
दीर्घबाहु वक्त्रिदेवो नन्दी तेजा: सुराधिप: ॥
जवनो वेगितो चामो मागवाच: सदात्मक: ।
कुम्भावतेश्वरी वेगी चामोदी मदविकल: ॥"
इति नानातन्त्रम् ॥
(धातुपाठेऽनुबन्धविशेष: । यथा, कविकल्पद्रुमे ।
"जो ज्वलायो निरत्यकर्तृ; वायुर्दुक्षिमक्
गुल: ॥"
छन्द:शास्त्रोक्तमध्यगुरुगणविशेष: । ( । ऽ । )
तदुक्तं छन्दोमञ्जर्य्याम् ।
"जो गुरुमध्यगतो रलमध्य: ॥" इति ॥ )

ज:, पुं, ( जयति जायते वा । जि जन् वा + "अन्येष्वपि दृश्यते ।" ३ । २ । १०१ । इति ड: । ) मृत्युञ्जय: । जनि: । तातमात्मम् । जनार्द्दन: । इति मेदिनी । जे, १ ॥ विषम् । भुक्ति: । तेज: । पिशाच: । इति शब्दरत्नावली ॥ वेग: । इत्येकाक्षरकोष: ॥

ज:, त्रि, ( जयति विपक्षमिति । जि + ड: । ) जेता । वेगित: । इति शब्दरत्नावली ॥

जकुटं, क्ली, (जं जातं सत् कुटति वक्रीभवतीति । कुट् कौटिल्ये + "इगुपधज्ञेति ।"३।१।१३५। इति क: ।) वार्त्ताकुपुष्पम् । इति मेदिनी ॥ टे, ४१ ॥

जकुट:, पुं, ( जो जात: सन् कुटतीति । कुट् + क: ।) मलयपर्व्वत: । कुक्कुर: । इति मेदिनी ॥ टे, ४१ ॥

जक्ष, इ म ङ दाने । गतौ । इति कविकल्पद्रुम: ॥ ( भ्वा-आत्मं-सकं-सेट् । ) इ, जङ्क्षते । न मध्यपाठे मेवेकचित् इदनुबन्धो वैदेमृकारक्रमेदार्थ: । म, अजङ्क्षि अजाङ्क्षि जङ्क्षं जङ्क्षं जाङ्क्षं जाङ्क्षं अनुबन्धबलादनुपधाया अपि दीर्घ: । चमते तु अत्र दीर्घविधिविषयो नापेक्षते । ङ, जङ्क्षते । इति दुर्गादास: ॥

जक्ष, भ क्षु ल भक्षे । हासे । इति कविकल्पद्रुम: ॥ (अदा-परं-भक्षे सकं-हासे-अकम-सेट् ।) केचित्तु विष्णुपुराणे यक्षराक्षसोत्पत्तिप्रसङ्गे भक्षयामिति यैरुक्तं ते वै यक्षास्तु यक्षणादिति भक्षणार्थेऽनेन यक्षशब्दव्युत्पादनादित्यमन्त:-स्थादिं मन्यन्ते ॥ तत्र अमरटीकायां रामा-

जकारस्थान्तःस्थयकारत्वाभ्युपगमे चण्ड इत्युक्ता वर्णविपर्ययं निर्मीतः। च, जचति। जु च, जच्चिति। इति दुर्गादासः॥

**जक्षणं**, क्ली, (जक्ष+भावे ल्युट्।) भक्षणम्। इति हेमचन्द्रः। ३। ८०॥

**जक्मः**, पुं, (जक्षिति भक्षयति शरीरं नाशयतीत्यर्थः। जक्ष+बाहुलकात् मन्।) यक्ष्मा। इत्यमरटीका॥ (केचित्तु "अर्त्तिस्तुसुहुसृधृक्षि..." १। १३८। इत्यादिसूत्रेण यत्न पूजायामिति धातोर्मन्प्रत्ययनिर्देशात् अन्तःस्थयकारादिरिति मन्यन्ते।)

**जक्ष्मा**, [न्] पुं, (जक्षिति भक्षयति शरीरं नाशयतीत्यर्थः। जक्ष+"सर्व्वधातुभ्यो मनिन्।" उणां। ४। १। ४४। इति मनिन्।) यक्ष्मरोगः। इत्यमरटीकायां भरतः॥

**जगच्चक्षुः**, [स्] पुं, (जगतां भुवनानां चक्षुरिव प्रकाशकत्वात्।) सूर्य्यः। इति हेमचन्द्रः। २। १२॥ (यथा, काशीखण्डे। ४६। ४४।
"इति काशीप्रभावज्ञो जगच्चक्षुस्तमोनुदः।
कृत्वा द्वादशधात्मानं काशीपुर्य्यां व्यवस्थितः॥")

**जगत्**, क्ली, (गच्छतीति। गम+"द्युतिगमिजुहोतीनां द्वे च।" ३। २। १७८। इत्यस्य वार्त्तिं इति क्विपि द्वित्वे च "गमः क्वौ।" ६। ४। ४०। इति मलोपे तुक्।) विश्वम्। तत्पर्य्यायः। जगती२ लोकः३ विष्टपम्४ भुवनम्५। इत्यमरः। ३। १। ६॥ विष्टपम्६। इति तट्टीका॥ (यथा, मनुः। १। ५२।
"यदा स देवो जागर्त्ति तदेदं चेष्टते जगत्।
यदा स्वपिति शान्तात्मा तदा सर्व्वं निमीलति॥"
गच्छति इतस्ततो यातीति।) वायौ, पुं। (गच्छन्त्यस्मिन् जीवा इति। महादेवः। यथा, महाभारते। १३। १७। १५१।
"विमुक्तो मुक्ततेजाश्च श्रीमान् श्रीवर्द्धनो जगत्॥")
जङ्गमे त्रि। इति मेदिनी। ते, १०८॥

**जगत्कर्त्ता**, [ऋ] पुं, (करोतीति। कृ+तृच्। ततो जगतः कर्त्ता कारकः।) ब्रह्मा। इति हेमचन्द्रः। २। १२६॥

**जगत्प्राणः**, पुं, (जगतां विश्वस्थजीवानां प्राणो जीवनम्।) वायुः। इत्यमरः। १। १। ६५॥

**जगत्साक्षी**, [न्] पुं, (जगतां भुवनानां साक्षी कर्म्मद्रष्टा।) सूर्य्यः। इति हेमचन्द्रः। २। १२॥

**जगती**, स्त्री, (गच्छति कार्य्यत्वात् नष्टा भवतीति। गम+"वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्च।" उणां २। ८४। इति अतिप्रत्ययेन निपातनात् साधुः। ततः शतृवत्त्वात् "उगितश्च।" ४। १। ६। इति ङीप्।) भुवनम्। (यथा, रामायणे। २। ६९। ११।
"सर्व्वोऽपि सागरं शुष्कं चन्द्रञ्च पतितं भुवि।
उपरुद्धाञ्च जगतीं तमसेव समावृताम्॥")
पृथ्वी। (यथा, मार्कण्डेये। ८। २२।
"तमायान्तं ततो देवी सर्व्वदैत्यजनेश्वरम्।
जगत्यां पातयामास भित्त्वा शूलेन वक्षसि॥")
जनः। छन्दोविशेषः। इति मेदिनी। ती, १०६॥ (सा च द्वादशाक्षरा वृत्तिः। यथा, छन्दोमञ्जर्य्यां १ स्तवके।
"त्रिष्टुप् च जगती चैव तथातिजगती मता॥"
अस्या उदाहरणादीनि छन्दःशब्दे द्रष्टव्यानि॥) जनपदम्। इति हेमचन्द्रः॥

**जगदम्बा**, स्त्री, (जगतामम्बा माता।) दुर्गा। यथाह कश्चित्।
"अदूरे जगदम्बाया शारदीयो महोत्सवः॥"
"जगदम्बापदद्वन्द्वमापदां चयबाधनम्॥"
इति शूलपाणिः॥
अपि च ब्रह्मवैवर्त्ते प्रकृतिखण्डे ३१ अध्याये।
"विष्णुमायां भगवतीं दुर्गां दुर्गार्त्तिनाशिनीम्।
प्रकृतिं जगदम्बाञ्च पतिपुत्त्रवतीषु च॥"

**जगदम्बिका**, स्त्री, (जगतां अम्बा जननी। ततः स्वार्थे कन्। टापि अत इत्वम्।) दुर्गा। यथा,
"सृष्टिस्थितिविनाशानां विधात्री जगदम्बिका।
अहं सर्व्वान्तरस्था च संसारार्णवतारिणी॥"
इति भगवतीगीतायां ५ अध्यायः॥
(यथा च देवीभागवते। १। ७। ४६।
"कामं क्षमस्व वचनद्य ममैव मातर्-
दुःखं न मे मरणजं जगदम्बिकेऽत्र॥")

**जगदाधारः**, पुं, (जगतामाधारः आश्रयः।) वायुः। इति शब्दचन्द्रिका॥ जगदाश्रयः। यथा,
"कालो हि जगदाधारः।" इति स्मृतिः।

**जगदीशः**, पुं, (जगतामीशो नियन्ता।) विष्णुः। इति शब्दरत्नावली॥ (यथा, पाद्मे उत्तरखण्डे। १११ अध्याये।
"सर्व्वान्तर्यामी जगदीशश्चाजरमर्द्दनः प्रभुः॥"
विधाता। यथा, कुमारे। २। ९।
"जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः।
जगदादिरनादिस्त्वं जगदीशो निरीश्वरः॥"
स्वनामख्यातपण्डितविशेषः। स च न्यायशास्त्रटीकाव्याख्यानादिग्रन्थप्रणेता अस्य जन्मस्थानं नवद्वीपः॥)

**जगद्गौरी**, स्त्री, (जगत्सु मध्ये गौरी।) मनसादेवी। इति शब्दरत्नावली॥

**जगद्धात्री**, स्त्री, (जगतां धात्री विधात्री।) दुर्गाविशेषः। अस्याः पूजायाः कालो विधिश्च यथा, निगमकल्पसारस्थागमसारस्मृते ब्रह्मे दुर्गाकल्पे।

श्रीशिव उवाच।
"प्रसीद जगतां मातर्ज्जगन्निस्तारकारिणि!।
अतएव महेशानि! तवाहं शरणागतः॥
त्वया यत् कथितं पूर्व्वं तत् सर्व्वञ्च श्रुतं मया।
जगद्धात्री महादुर्गा चतुर्व्वर्गफलप्रदा॥
तस्याः पूजाविधिर्दिव्यं कालं तत्र प्रकाशितम्।
तदेव कथयेशानि! श्रोतुमिच्छामि साम्प्रतम्॥

श्रीदेव्युवाच।
कथयामि महेशान! सावधानोऽवधारय।
तस्याः पूजाविधिर्दिव्यं समयं भावभेदतः॥
कार्त्तिके शुक्लपक्षे च या दुर्गानवमी तिथिः।
सा प्रशस्ता महादेव! महादुर्गाप्रपूजने॥
प्रातश्च सात्त्विकी पूजा मध्याह्ने राजसी मता।
सायाह्ने तामसी पूजा त्रिविधा परिकीर्त्तिता॥
जपयज्ञादिभिर्देव! इति वैकालिकी मता।
अथान्यत् संप्रवक्ष्यामि शृणुष्व परमेश्वर!॥
नवम्यादिनवम्यान्तं पूजाकालमितीरितम्।
त्रिदिने त्रिविधा पूजा दशम्याञ्च विसर्ज्जयेत्॥
पूजापरेऽह्नि देवेश! तस्याश्च विसर्ज्जनम्।
बोधितायाः प्रकारेण तत्र पूजा प्रकीर्त्तिता॥

श्रीशिव उवाच।
त्रिसन्ध्याव्यापिनी सा तु यदि स्यान्नवमी तिथिः।
त्रिकाले त्रिविधा पूजा कथं देव्या जगन्मयि!॥
कथयस्व महेशानि! इति मे संशयो हृदि॥

श्रीदेव्युवाच।
सा प्रातर्व्यापिनी यत्र वासरे नवमी तिथिः।
त्रिसन्ध्यं पूजयेत्तत्र वासरे जगदम्बिकाम्॥
मुहूर्त्तव्यापिनी चापि तत्र ग्राह्या महेश्वर!।
एककाले त्रिधा पूजा साधको नैव कारयेत्॥
इति ते कथितं वत्स! किमन्यत् श्रोतुमिच्छसि।
कथयिष्यामि तद्ब्रह्मन् तव प्रीत्या त्रिलोचन!॥"

श्रीपार्व्वत्युवाच।
"दशम्यां बलिदानन्तु निषिद्धं जगदीश्वर!।
कथं त्रिकालं पूजा वा सम्भवेत् परमेश्वर!॥

श्रीशिव उवाच।
नवमीतिथिमाश्रित्य यत्र पूजाविधिर्भवेत्।
निषिद्धं बलिदानन्तु दशम्यां तत्र सुन्दरि!॥
नवमीदिनमाश्रित्य पूजाविधिरिहोदितः।
दशम्यां बलिदानन्तु निषिद्धं नात्र पार्व्वति!॥
शास्त्रान्तरे पूर्व्वं पूजाप्रकारं उक्तः।
"मुहूर्त्तव्यापिनी चापि प्रातश्चेन्नवमी तिथिः।
तद्दिने पूजनं कार्य्यं त्रिसन्ध्यं वरवर्णिनि!॥
त्रिकालं पूजयेत्तत्र नैककाले कदाचन॥"
अथ कात्यायनीतन्त्रे अष्टमपटले।
"कुम्भराशिगते चन्द्रे नवम्यां कार्त्तिकस्य च।
उभयत्रोदिते भानुर्दुर्गामाराध्य यत्नवान्॥
पुत्त्रारोग्यबलं लेभे लोकसाक्षित्वमेव च।
तां तिथिं प्राप्य मनुजः शनिभौमदिने यदि॥
प्रपूजयेन्महादुर्गां धर्म्मकामार्थमोक्षदाम्॥"
शक्तिसङ्गमतन्त्रे।
"कार्त्तिकस्य सिते पक्षे नवम्यां जगदीश्वरीम्।
त्रिकालमेककालं वा वर्षे वर्षे प्रपूजयेत्॥
निर्म्माय प्रतिमां शक्त्या जगद्धात्र्या विधानतः।
पूजयित्वा परदिने प्रतिमां तां विसर्ज्जयेत्॥
एवं कृत्वा चक्रवर्त्ती भवेत् साधकसत्तमः।
पुत्त्रपौत्त्रधनैश्वर्य्यसंयुतास्य भवेत् पुरी॥"
तन्त्रान्तरे।
"कुजवारे युगाद्यायां नवम्यान्तु जगत्प्रसूः।
प्रादुर्भूता महेशानी तत्र तां परिपूजयेत्॥"
तन्त्रान्तरे।
"त्रिकालं पूजयेद्दुर्गां स्तवैर्नैकाक्षरैश्च च।
नानारत्नविधानैश्च गीतवाद्यपुरःसरम्॥
कार्त्तिकस्य सिते पक्षे नवम्याञ्च विशेषतः।
कृत्वैवं साधकश्रेष्ठो लभेद्राज्यमकण्टकम्॥"

योगिनीतन्त्रे ।
"कार्त्तिकेऽमलपक्षे तु नवम्याञ्च विशेषतः ।
प्रातर्भानु जगद्धात्रीं पूजयेद्दीपमालया ॥"
आगमतत्त्वसारे ।
"कार्त्तिकेऽमलपक्षे तु नवम्यां भौमवासरे ।
आविर्भूता जगद्धात्री युगादौ दैत्यनाशिनी ॥"
उत्तरकामाख्यातन्त्रे ।
"कार्त्तिके शुक्लपक्षे तु त्रेतायां प्रथमेऽहनि ।
त्रिसन्ध्यं पूजयेद्देवीं दुर्गां सम्पत्समृद्धये ॥"* ॥
कुब्जिकातन्त्रे ।
"कार्त्तिके शुक्लपक्षे तु नवम्यां जगदम्बिकाम् ।
दुर्गां प्रपूजयेद्भक्त्या सर्व्वकामार्थसिद्धये ॥"* ॥
दुर्गाकल्पे विद्योत्पत्तिः ।
"कार्त्तिके शुक्लपक्षेऽह्नि भौमवारे जगत्प्रभुः ।
सर्व्वदेवहितार्थाय दुर्वृत्तशमनाय च ॥
आविरासीज्जगच्छान्त्यै युगादौ परमेश्वरी ॥"
व्रतकालविवेकधृतवचनम् ।
"कार्त्तिकेऽमलपक्षस्य त्रेतायां नवमेऽहनि ।
पूजयेत्तां जगद्धात्रीं सिंहपृष्ठे निषेदुषीम् ॥"* ॥
स्मृतिः ।
"युगाद्या वर्द्धहिश्च सप्तमी पार्व्वतीप्रिया ।
रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता ॥"* ॥
तत्त्वसारार्णवे ।
"कार्त्तिकेऽमलपक्षे तु युगाद्या नवमी स्मृता ।
पूर्व्वाह्णव्यापिनी तत्र पूजाविधिरिहोदितः ॥"* ॥
भविष्यपुराणतत्त्वार्णवयोः ।
"कार्त्तिके शुक्लपक्षे तु युगाद्या नवमी स्मृता ।
पूर्व्वाह्णव्यये कालात्मिका परदिने यदि ॥
तत्र पूजादिकं कुर्य्यात् पितृनिर्म्मयाहते ॥"
स्मृतिसागरे ।
"कार्त्तिकस्य युगाद्यायामृद्धिकामोऽर्च्चयेदुमाम् ॥"
इति जगद्धात्रीपूजाकालव्यवस्था ॥ * ॥ * ॥
अथ जगद्धात्रीविद्योत्पत्तिः ।
श्रीपार्व्वत्युवाच ।
"भगवन् ! प्राणनाथेश ! सर्व्वतत्त्वविशारद ! ।
श्रुता कात्यायनीविद्यासमुत्पत्तिस्त्रिलोचन ! ॥
महादुर्गाजगद्धात्रीविद्योत्पत्तिर्भवेद्यतः ।
तत् सर्व्वं ब्रूहि भगवन् ! कृपया परमेश्वर ! ॥
यदि न कथ्यते देव ! विमुञ्चामि तदा तनुम् ॥
श्रीशिव उवाच ।
शृणु पार्व्वति ! वक्ष्यामि रहस्यं परमाद्भुतम् ।
यत् श्रुत्वा लभते देवि ! सौभाग्यं सुखसत्तमम् ॥
पुरा पुरन्दरमुखाः स्वेश्वरत्वाभिमानिनः ।
प्राहुः किमीश्वरोऽस्मत्तोऽतिरिक्तः सुरानिति ॥
अथ दुर्गा जगन्माता निजा चैतन्यरूपिणी ।
एतेषां धर्म्मसेतूनामिन्द्रादीनां नियन्त्रणम् ॥
करिष्यामीति निश्चित्य ज्योतीरूपं दधानकम् ।
तेषामाविरभूद्दुर्गा जगद्धात्री जगन्मयी ॥
कोटिसूर्य्यप्रतीकाशा चन्द्रकोटिसमप्रभा ।
ज्वलन्तं पर्व्वतमिव सर्व्वलोकभयङ्करी ॥
तद्दृष्ट्वा सुराः सर्व्वे भयमापुर्म्मदौजसः ।
किमेतत्त्व विनिश्चेतुं प्रत्यासे ह्यभवन् सुराः ॥
वायुमाहुः समाहूय किमेतत् परमाद्भुतम् ॥
विजानीहि महावीर ! मातरिश्वा दिवःपते ! ॥
ततो वायुर्द्रुतं तत्र गतस्तेजोऽन्तिकं ततः ।
तमन्तिकमुपायातं प्राह तेजोमयी ततः ॥
बलवान् कस्त्वमायातो वीर्य्यं किञ्चास्ति वा त्वयि ।
आदातुं शक्यते सर्व्वं पृथिवीतलसम्भवम् ॥
इति प्रत्युक्तवान् वायुः तृणं तत्रैव तिष्ठति ।
आदत्स्वैतत् तृणमिति निदधौ वायवे तृणम् ॥
वायुः सर्व्वप्रयत्नेन नादातुं तत् क्षमोऽभवत् ।
ततो देवाः प्राहुरग्निं भीता उद्विग्नमानसाः ॥
अग्ने ! एतद्विजानीहि किमेतत् सर्व्वमाकुलम् ।
इत्युक्तो देवतावृन्दैरग्निस्तेजोऽन्तिकं गतः ॥
असतो जातवेदा वा तेजो वागित्युवाच तम् ।
स प्रोक्तवानहमस्मि सर्व्वदाहकशक्तिकः ॥
दहैतत्तृणमत्यल्पमिति तस्मै तृणं ददौ ।
अग्निः सर्व्वप्रयत्नेन दग्धुं नैतत् क्षमोऽभवत् ॥
ततो निवृत्तो वह्निर्भूत्वा सोऽपत्रपान्वितः ।
एकत्रस्थाः सुराः सर्व्वे मन्त्रयामासुरुत्तमम् ॥
इयमेवेश्वरी नूनं स्तोष्यामो नेश्वरा वयम् ।
इति निश्चित्य सुधियस्तुष्टुवुः परमेश्वरीम् ॥
प्राहुर्देवगणाः सर्व्वे क्षमीशा नेश्वरा वयम् ।
ईश्वरत्वाभिमानेन यदस्माकं सुदुष्कृतम् ॥
क्षन्तुमर्हसि तत् सर्व्वं कृपया जगदम्बिके ! ।
तव रूपं सुगोप्यं यन्मङ्गलं सर्व्वमङ्गलम् ॥
तद्द्रष्टुं वयमिच्छामो देहि दर्शनमुत्तमम् ।
इत्युक्तानां सुरश्रेष्ठानामाविरासीच्चिदम्बरे ॥
तेजस्यन्तर्हिते तस्मिन् चमत्कारकलेवरे ।
मृगेन्द्रोपरि सुस्मेरा सर्व्वालङ्कारभूषिता ॥
चतुर्भुजा महादेवी रक्ताम्बरधरा शुभा ।
बालार्कसदृशीदेहा नागयज्ञोपवीतिनी ॥
त्रिनेत्रा कोटिचन्द्राभा देवर्षिमुनिसेविता ।
दर्शयामास देवानामेवं रूपं जगन्मयी ॥
ततस्तां तुष्टुवुर्देवा जगद्धात्रीं महेश्वरीम् ।
वरं प्रापुः सुरगणा यथेष्टं निजशान्तये ॥
तत्रैवान्तर्हिता देवी महादुर्गा जगन्मयी ।
इति ते कथितं भद्रे ! विद्योत्पत्तिं सुदुर्लभाम् ॥"
इति कात्यायनीतन्त्रे ७६ पटलः ॥ * ॥
श्रीशिव उवाच ।
"अथ दुर्गामनुं वक्ष्ये शृणुष्व हरवल्लभे ! ।
यस्य प्रसादमात्रेण मुच्यते भवबन्धनात् ॥
शान्तवर्णं समुद्धृत्य वामकर्णविभूषितम् ।
इन्दुबिन्दुसमायुक्तं वीजं परमदुर्लभम् ॥
चतुर्व्वर्गप्रदं सद्योमहापातकनाशनम् ।
एकाक्षरीसमा नास्ति विद्या त्रिभुवने प्रिये ! ॥
दुर्गाद्यां वा जपेद्विद्यां तदन्ते वह्निसुन्दरी ।
लक्ष्म्याद्यां वा जपेद्विद्यां षडर्णं वा जपेत् सुधीः ॥
बधूबीजयुतां वापि त्र्यक्षरीं वा जपेत् पुनः ।
कन्याद्यां वा जपेद्विद्यां चतुर्व्वर्गफलाप्तये ॥
वाग्भवाद्यां जपेद्वापि प्रणवाद्यां जपेत् पुनः ।
कामबीजादिकां वापि षडर्णां वा जपेत् पुनः ॥
अष्टाक्षरी त्रिविधा विद्या कथिता मया पुरा ।
विना मन्त्रैर्विना पुष्पैर्विना होमपुरःसरैः ॥
प्राणायामं विना देवि ! जपमात्रेण सिद्धिदा ।
मन्त्रस्यास्य ऋषिर्देवि ! नारदः परिकीर्त्तितः ॥
गायत्री छन्द आख्यातं जगद्धात्री च देवता ।
चतुर्व्वर्गप्रदा दुर्गा सर्व्वतन्त्रेषु संस्थिता ॥
दीर्घस्वरसमायुक्तनिजबीजानि पार्व्वति ! ।
विन्यसेदात्मनो देवि हृदयादिषु शङ्करि ! ॥
पूर्व्ववन्न्यासवर्ग्गन्तु पूर्व्ववत् सर्व्वमाचरेत् ।
कालीवदाचरेद्विद्यां जपेद्विद्यामवर्ज्जितम् ॥
जपहोमादिकं देवि ! पुरश्चरणमीरितम् ।
यथास्थाने यथाकाले यथाचारविधानतः ॥
प्रजपेत् परया भक्त्या दुर्गां दुर्गतिनाशिनीम् ॥ * ॥
ध्यानमस्याः प्रवक्ष्यामि शृणुष्व नगनन्दिनि ! ॥
सिंहस्कन्धाधिरूढां नानालङ्कारभूषिताम् ।
चतुर्भुजां महादेवीं नागयज्ञोपवीतिनीम् ॥
शङ्खचक्रधनुर्व्वाणलोचनाभिनवान्विताम् ।
रक्तवस्त्रपरीधानां बालार्कसदृशीतनुम् ॥
नारदाद्यैर्मुनिगणैः सेवितां भवसुन्दरीम् ।
त्रिवलीवलयोपेतनाभिनालमृणालिनीम् ॥
रत्नद्वीपे महाद्वीपे सिंहासनसमन्विते ॥
प्रफुल्लकमलारूढां ध्यायेत्तां भवगेहिनीम् ।
एवं ध्यात्वा जगद्धात्रीं पूर्व्वोक्तपूजनं चरेत् ॥
यन्त्रमस्याः प्रवक्ष्यामि शृणुष्व हरवल्लभे ! ।
त्रिकोणविलयश्चादौ षट्कोणद्वितयन्ततः ॥
अष्टपत्रं ततो लिख्य त्रिरेखावेष्टितं ततः ।
चतुर्भूपुरसंयुक्तं विलिखेद्विधिनामुना ॥
तत्र तां पूजयेद्देवीं मूलप्रकृतिरूपिणीम् ।
प्रभाद्याः शक्तयः पूज्या गन्धाद्यैर्वरलोचने ॥
प्रभा माया जया सूक्ष्मा विशुद्धा नन्दिनी पुनः ।
सुप्रभा विजया सर्व्वसिद्धिदा नव शक्तयः ॥
पीठाद्याः पूजयेत्तास्तु रक्तचन्दनदूर्व्वकैः ।
शङ्खपद्मनिधी देव्या वामदक्षिणयोगतः ॥
पूजयेत् परया भक्त्या रक्तचन्दनदूर्व्वकैः ।
अर्घ्यादानं ततः कुर्य्यात् पूजान्ते नगनन्दिनि ! ॥
अङ्गावृतिः पुनः पूज्या पश्चादष्टौ च मातरः ।
वज्राद्यायुधसंयुक्ता भूपुरे लोकनायकाः ॥"
इति कात्यायनीतन्त्रे ७७ पटलः ॥ * ॥
श्रीशिव उवाच ।
"पूजा तिथिविशेषेण चतुर्व्वर्गफलाप्तये ।
कर्त्तव्या या तु दुर्गायास्तां शृणुष्व शुभानने ! ॥
अष्टम्याञ्च चतुर्द्दश्यां नवम्यां वापि यत्नतः ।
यः पूजयेन्महादुर्गां सोऽभीष्टफलमाप्नुयात् ॥
पौर्णमास्याममायां वा रविसंक्रमणे तथा ।
शनिभौमदिने चैव पूजयेत् परमेश्वरीम् ॥
सुखं सौभाग्यमारोग्यमैश्वर्य्यं लभते ध्रुवम् ।
शनिभौमदिने चैव यदि स्यादष्टमी तिथिः ॥
तत्र पूजा जगद्धात्री पुत्रपौत्रधनप्रदा ।
सोमवारेऽप्यमावास्या महानक्षत्रसंयुता ॥
उत्तरा अष्टमीयुक्ता आदित्ये च पार्व्वति ! ।
चतुर्थ्यङ्गारवारे च रोहिणीसंयुता यदि ॥
शुक्लाष्टम्यां तथा काली यदि स्यात् परमेश्वरि ! ।
एषु पूजा महादेव्याः कर्त्तव्या सर्व्वसिद्धये ॥
मधुमासे सिताष्टम्यां वैशाखसितयेऽहनि ।

आशुतुर्यं भवराणं सहस्रं प्रस्थाप च ।
नैवेद्यान्नान्नमपि पत्नी भवन्ती पुण्ययोगतः ।
हता भविता भो विप्राः प्रोक्ता मे युक्तवाक्यरे ॥"
तच्छ्राद्धप्रदानमाहात्म्यं यथा,—
"बहून् नियोजयेदत्र लोकान् नैवेद्यभोजने ।
लौकिकव्यवहारोऽयं पश्यति श्रीः स्वयं सुखम् ।
भुङ्क्ते नारायणो नित्यं तथा भक्तं शरीरवान् ॥
अन्नं तच्चि नैवेद्यं पायसं चाक्षुषं चाचरेत् ।
भग्नपात्रगतं नान्नं दिव्यमेवापुरितं पावनम् ॥
आमायाचानतो यामं दर्शनादृष्टचिन्तं तथा ।
आस्वादाद्भुजाकृतं पापं भावयन् यमीहति ॥
अर्पणात् कृतं पापं मिथ्याचारं तथा द्विजाः ॥
भाजने भेषजादि पापं भारीरं वै न संशयः ।
महापवित्रं हि हरेर्निवेदितं
नियोजयेद्बुधः पितृदैवकर्म्मसु ।
हृष्यन्ति तस्मै पितरः सुराश्च
प्रयान्ति लोकं मधुसूदनस्य ॥
नातः परं हि यजन्ति हव्यकव्येषु भो द्विजाः ! ।
महाश्चर्यं रूपमास्थाय तदश्नन्ति दिवौकसः ॥
विष्णुदत्तगतं तद्धि निर्माल्यं पतिताद्यः ।
स्पृशन्ति चेत्ततु द्विजा हि यथा विष्णुरपि तत् ॥
निन्दन्ति ये तदन्नं मूढाः पण्डितमानिनः ।
स्वयं तद्भक्षणेषु वहते नावराश्रितः ॥
येषामन्न न स्पर्शेद्भुवा तेषां हि दुर्गतिः ।
कुम्भीपाके महाघोरे पच्यन्ते तेऽतिदारुणे ॥
चिरस्थमपि संशुष्कं नीतं वा दूरदेशतः ।
यथा तथोपयुक्तं तत् सर्व्वपापापनोदनम् ॥
नैवेद्यान्नं जगन्नाथं गाङ्गं वारि समं द्वयम् ।
दृष्ट्याधर्मचिन्ताभिर्भवनादयमाश्रयम् ॥"

इत्युत्कलखण्डम् ॥ * ॥

स च कलेर्दशसहस्रवर्षपर्यन्तं पृथिव्यां स्थास्यति।
यथा,—
"ग्रामग्रामो हरेर्मूर्त्तिर्जगन्नाथश्च भारतम् ।
कलेर्दशसहस्राणि ययौ त्यक्त्वा हरेः पदम् ॥"

इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥

( स्वनामख्यातो बहुग्रन्थकर्त्ता पण्डितविशेषः ।
अयं हि तैलङ्गवंशोद्भवः । अस्य पिता पेरम-
भट्ट इति ख्यातः । असौ पण्डितराजजगन्नाथो
दिल्लीप्रभोः शाहजहान्-ज्येष्ठतनयस्य
दाराशाहस्य सभायामासीत् । यतोऽनेन
जगदाभरणकाव्ये दाराशाहस्यैव यशोवर्णनं
कृतम् । अपिच भामिनीविलासस्यान्ते "दिल्ली-
वल्लभपाणिपल्लवतले नीतं नवीनं वयः" इत्यु-
क्तम् । दाराशाहस्तु १५८१ शकाब्दीयखिस्तपञ्च-
दशशततमाब्दपर्यन्तं जीवित आसीत् । अतः
पण्डितराजजगन्नाथोऽयं तात्कालिक इत्येवा-
यातम् । अनेन पण्डितराजपदवी शाह-
जहान्नाम्नो दिल्लीप्रभोः प्राप्तेति तत्कृतप्राणा-
भरणविलासनामकग्रन्थादेवावगम्यते यथा,—
"अथ सकललोकविस्तारविस्तारितसमलोप-
कारपरम्पराधीनमानसेन प्रतिदिनमुपचयदन्य-
नवनवानेकविद्याविलोलिताम्तःकरणैः कवि-

निचयाधमानेन सकलगीतकलिकालेन
कुमतिकलयनावनमालापादितवैदग्धमार्गाविलोक-
नाय मनुदीयितनुतवीरचरणयाशालायेन स्वनि-
मतेन नव्यानामपदकोपमनःप्रसादेन शाहुर-
ज्जमहनेन्द्रा रायमुकुन्देनादिष्टेन सार्व्वभौम-
श्रीशाहजहान्प्रसादाधिगतपण्डितराजपदवीवि-
राजितेन तैलङ्गकुलावतंसेन पण्डितजगन्नाथेना-
सफविलासाख्येयमाख्यायिका निरमीयत । सैव
मनुष्यैः सहृदयानामहर्दिवमास्वादिता भव-
तात् ॥"

एतत्पण्डितविरचिता बहवो ग्रन्थाः सन्ति ।
तेषु अद्यावधि ज्ञाताश्चैते, रसगङ्गाधरः १,
मनुमावर्णनचम्पूः २, रतिमन्मथनाटकम् ३, वसु-
मतीपरिणयनाटकम् ४, जगदाभरणकाव्यम् ५,
प्राणाभरणकाव्यम् (कामरूपदेशाधिपस्य प्राण-
नारायणमहीपस्य स्तुतिरूपोऽयं ग्रन्थः) ६,
पीयूषलहरी ७, अमृतलहरी ( यमुनास्तुति-
रूपोऽयं ग्रन्थः ) ८, सुधालहरी ( सूर्य्यस्तव-
रूपोऽयं ग्रन्थः ) ९, करुणालहरी ( विष्णु-
लहरी वा ) १०, लक्ष्मीलहरी ११, भामिनी-
विलासः १२, मनोरमाकुचमर्द्दिनी १३, अश्व-
धाटीकाव्यम् १४, आसफविलासः १५ ॥ * ॥

सर्व्वशास्त्रगोमाधिकोऽपरपण्डितविशेषः । अयं
हि विवादभङ्गार्णवसेतु-रामचरितादिग्रन्थानां
प्रणेता । पितास्य रुद्रदेवः माता च अम्बिका ।
रुद्रदेवस्तु चतुःषष्टितमवयसि पूर्व्वसहधर्म्मिण्यां
सहसुतायां मृतायां संसारविरक्तः काशीवास-
सुखमभिलषन् चिरसुहृदं नित्यानन्दपुरनिवा-
सिनं ज्योतिर्विद्याविशारदं सुप्रसिद्धं चक्रेश्वर-
वाचस्पतिमभिगम्य स्वीयान्तिमदशापन्नफलं
पृष्टवान् । चक्रेश्वरस्तु रुद्रदेवस्य जन्मलग्नानु-
सारतश्चरमे वयसि सुप्रसिद्धपुत्रलाभरूपं शुभ-
फलमवगम्य वासुदेवनाम्नः कस्यचिद् विप्रवर-
स्याम्बिकानाम्नीं कन्यामुद्वाहयामास । रुद्रदेवस्तु
ज्योतिर्विद्यापारदर्शिनश्चक्रेश्वरस्य वाक्याद-
म्बिकां परिणीय सत्पुत्रप्राप्तिकामो काशीमभि-
गम्य विश्वेश्वरसुहृद्यैकाविंशतिपुरश्चरणं कृत-
वान् । चरमपुरश्चरणदिवसे स्वामिन्याः शिवयामे
प्राप्तसत्पुत्रलाभस्वप्नः प्रहृष्टमनाः पुनः स्वस्थानं
त्रिवेणीप्रदेशं प्रत्यागत्य गार्हस्थ्यधर्म्मानुरतो
बभूव । अथ गच्छति काले पतिपरायणाम्बिका
गर्भमुपलभ्य १६१६ शके (११०१ परिमितबङ्गाब्दे)
गौराब्दिकस्य देवीपक्षीयपञ्चम्यां पुत्ररत्नं जग-
न्नाथं प्रसूतवती । रुद्रदेवस्तु नवजातपुत्रस्य जात-
संस्कारादिकं विधाय राधासुकारतो रामराम
इति नाम चक्रे परं कुमारस्य मातामहो वासु-
देवः अस्मिन्नेव समये श्रीजगन्नाथक्षेत्रात् तीर्थ-
स्थानात् प्रत्यागत्य दौहित्रमुखं दृष्ट्वा जगन्नाथ
इत्याख्ययैनमयोजयत् । ततः प्रभृत्येवायं जगन्नाथ
इति नाम्ना प्रसिद्धोऽभूत् ।

अयन्तु बाल्यावस्थायामतीवचञ्चलप्रकृति-
र्दुर्दान्तोऽपि स्मृतिशक्तिबलवात्सल्यादिगुण-

निकरैश्च बहूनां पितरौ प्रियपात्रमासीत् ।
अयं प्रथमतः पितृसन्निधाने व्याकरणमधीत्य
ततो ज्येष्ठतातस्य न्यायलङ्कारोपनामकस्य भव-
देवस्य समीपे साहित्यादिकमधीतवान् । ततो
भवदेवस्य परलोकगमनानन्तरं नानाकपुरनि-
वासिनं रघुदेवविद्यावाचस्पतिं अध्यापकत्वेन
स्वीकृत्य दर्शनशास्त्राण्यधिगम्य कालं यापया-
मास । अस्य एतादृशी प्रखरा स्मृतिशक्तिरासीत्
यद्यदनीतस्यापि भिन्नदेशीयभाषायां निबद्धस्य
ग्रन्थस्य द्विरपि पठितस्य एकवारमात्रश्रवणेनार्थं
अनर्गलं अभ्यास एव आवर्त्तयितुं समर्थः ।
एतादृशमेधाशक्तिरेवैनं अल्पसमयेन बहु-
शास्त्रपारदर्शिनमकरोत् ।

पञ्चदशवर्षवयस एवायं मीमांसकनाम्नीं सुलक्षणां
कन्यामुपनीतवान् । विवाहात् परमेवास्य ज्येष्ठ-
तातो भवदेवः परलोकं गतः । माता तु पूर्व्वमेव
कालधर्म्ममुपगता पिता च चतुर्विंशतिवर्षक्र-
मेणमवलोक्यैव दृष्ट लोकं तत्याज । पितृवियोगा-
नन्तरमेवायं छात्रानध्यापयितुं प्रवृत्त आसीत् ।

अथ कदाचित् वर्द्धमानाधिपतिर्महाराज-
त्रिलोकचन्द्रबाहादुरोऽस्य पाण्डित्यप्रभावमव-
गम्य राजसभामधिरोहयितुं निमन्त्रयामास ।
जगन्नाथस्तु राजप्रसादमुपलब्धुं राजसभां
प्रविश्य तर्कजालेन तत्रस्थान् पण्डितान् जित-
वान् । महीपतिस्तु जगन्नाथस्य तादृशीं बुद्धि-
शक्तिं मेधाशक्तिञ्चावलोक्य विशेषेण परीक्षितुं
पथि दृष्टस्य समस्तवस्तुनो वार्त्तां विज्ञापयितु-
मादिदेश । जगन्नाथस्तु नृपतेर्मनोऽभिप्रायमव-
गम्य त्रिवेणीप्रदेशात् वर्द्धमानपर्य्यन्तं यावत्
पथि स्थितानां प्रत्येकपादपमन्दिरादीनामपि
वृत्तान्तं कथयामास । राजा तु स्वकर्म्मचारिभि-
रेतद्वृत्तान्तस्य याथार्थ्यमुपगम्य अतिशयेना-
नन्दितो बभूव ।

एकदा मुर्शिदाबादप्रदेशनृपतेर्यवनस्य
मन्त्री नन्दकुमारोऽस्य पाण्डित्यमवगम्य (नवाब)
महीपतिसमीपमेनमानयामास । नृपतिस्तु बहु-
विधैर्दुरूहप्रश्नैरेनं वञ्चयितुमभिलषन् परं जग-
न्नाथः स्वीयबुद्धिप्राखर्य्येण नृपतिकृतप्रश्नानां
सदुत्तरं दत्त्वा तं सन्तोष्य च तस्माद् बहु-
मार्थप्रदां भूम्यादिसम्पत्तिं लब्धवान् ।

अथ कालचक्रगत्यनुसारतो यवनराजानां
वैभवरविरस्तं गतः इंराजराजानां सौभाग्य-
समयः समुपागतश्च । तदा इंराजनृपतय-
स्तद्राजीमप्रजारक्षणार्थं विचारकार्य्यस्य सौ-
कर्य्याय जगन्नाथतर्कपञ्चाननं समाहूय व्यव-
हारोपयोगिनं ग्रन्थमेकं प्रणेतुमादिदेश । जग-
न्नाथस्तु नवीननृपतिनिदेशवशात्:"विवादभङ्गा-
र्णवसेतु-" नामकं ग्रन्थं प्रणीतवान् ।

अस्य त्रिषष्टितमवयसि सहधर्म्मिणी द्रौपदी
बहुपुत्रपौत्रादिकं संस्थाप्य परलोकं गता । अस्य
द्वौ पुत्रौ तिस्रः कन्याश्चाभवन् । पुत्रयोर्ज्येष्ठ्याम-
सार्व्वभौम एव ज्येष्ठः प्रतिभाशाली बहुशास्त्र-

मारदर्शी च। अगन्नाथोऽयमन्तिमावस्थायां दुष्प्रपौत्रादिसुखमवलोक्य अतिदुर्लभमेतादृशं संसारसुखमनुभूय शकनरपतेः १७२९ वत्सरे (१२१४बङ्गाब्दे) आश्विनशुक्लपञ्चमीयुक्ततृतीयायां गङ्गातीरे प्राणान् तत्याज। तस्य प्राणान्तपर्य्यन्तमेवाखिलेन्द्रियशैथिल्यं न जातम्। गङ्गातीरं गतेन मुमूर्षुणानेन चरमश्वासे कृतः श्लोको यथा,—

"केचिद्वद्न्ति ब्रह्म निराकारं नराकारञ्च केचन।
वयन्तु दीर्घयोगेन नीराकारमुपास्महे॥" इति॥)

जगन्नु:, पुं, (जगता विश्वस्थजीवजातेन नम्यते इति। जगत् + नम् + बाहुलकात् डुः। यद्वा, नु + क्विप् स्तुतौ। नु केवलं स्तुतिरित्यर्थः जगति विश्वसंसारे नुः स्तुतिर्यस्य। सर्व्वजीवस्तुतत्वादेवास्य तथात्वम्।) अग्निः। जन्तुः। इति विश्वः शब्दरत्नावली च॥ जगनुरपि पाठः॥

जगरः, पुं, (जागर्त्ति संग्रामेऽनेनेति। जागृ + अप्। पृषोदरादित्वात् साधुः।) कवचः। इति हेमचन्द्रः। ३। ४३०॥

जगलः, पुं, (पुनःपुनरतिशयेन वा गलतीति। गल चरणे + यङ्लुगन्तात् अच्। संज्ञापूर्ब्बकत्वात् "दीर्घोऽकितः।" ७।४।८३। इति न दीर्घः। यद्वा, जन् + डः। जः जातः सन् गलति निःसरतीति। गल + अच्।) सुराकल्कम्। मेया इति भाषा॥ तत्पर्य्यायः। मेदकः २। इत्यमरः। २। १०। ४२॥ (यथा, शार्ङ्गधरे मध्यखण्डे दशमेऽध्याये।

"तदधो जगलो ज्ञेयो मेदको जगलाह्वन:॥")
मदनवृक्षः पिष्टमद्यम्। (तद्गुणा यथा,—
"शूलप्रवाहिकाटोपकफवातार्शसां हितः।
जगलो ग्राहिरूक्षोष्णः शोफघ्नो भक्तपाचनः॥"
इति चरके सूत्रस्थाने सप्तविंशेऽध्याये॥
"ग्राह्युष्णो जगलः पक्ता रूक्षस्तृट्कफशोफकृत्।
हृद्यः प्रवाहिकाटोपदुर्नामानिलशोफकृत्॥"
इति सुश्रुते सूत्रस्थाने ४५ अध्याये॥)
धूर्त्ते त्रि। इति मेदिनी। ले, ६१॥ कवचः। रलयोरैक्यात्॥ गोमये, क्ली। इति रत्नमाला॥ (यथा, वैद्यकरत्नमालायाम्।
"गोमयं जगलं गोविट् गोहन्नं तच्च गोमलम्॥")

जग्धं, त्रि, (अद्यते स्म इति। अद् भक्षणे + क्तः। "अदो जग्धिर्ल्यप्ति किति।" २। ४। ३६। इति जग्धादेशः। इकार उच्चारणार्थः।) भुक्तम्। इत्यमरः। ३। २। १११॥
("जिग्धं घनं कुटजकल्कमजस्रं जग्धम्॥"
इति वैद्यकचक्रपाणिसंग्रहेऽतीसाराधिकारे॥)

जग्धिः, स्त्री, (अद भक्षणे + क्तिन्। "अदो जग्धिर्ल्यप्ति किति।" २। ४। ३६। इति जग्धादेशः।) सहभोजनम्। इत्यमरः। २।९।५५॥ भक्षणम्। इति हेमचन्द्रः॥ (यथा, मनौ। ३। ११५।
"अदत्त्वा तु य एतेभ्यः पूर्ब्बं भुङ्क्तेऽविचक्षणः।
स भुञ्जानो न जानाति श्वगृध्रैर्जग्धिमात्मनः॥")

जग्मिः, पुं, (गच्छति सततो यातीति। गम + "आदृगमहनजनः किकिनौ लिट् च।" ३।२।१७१। इत्यत्र "भाषायां धाञ्कृसृजनिगमिनमिभ्यः।" इति वार्त्तिकोक्त्या किः। लिड्वच्च।) वायुः। इति केचित्॥

जघनं, क्ली, (हन्यते इति। हन् + "हन्तेः शरीरावयवे द्वे च।" उणां। ५। ३२। इति अच् द्वित्वञ्च। "अभ्यासाच्च।" ७। ३। ५५। इति कुत्वम्।) स्त्रीकट्याः पुरोभागः। (यथा, माघे। ५। २९।
"नाभिह्रदैः परिगृहीतरयाणि यत्र
स्त्रीणां हठान्नयनसेतुनिवारितानि॥")
कटिः। इति मेदिनी। ने, ६७॥ (यथा, देवीभागवते। १। ६। ८१।
"भगवान् द्विगुणं चक्रे जघनं विस्तितौ तदा।
शीर्षे सन्दधतौ तत्र जघने परमाद्भुते॥")

जघनकूपकौ, पुं, (जघनकूपे इव कायतः इति। कै + कः।) कुकुन्दरौ। इति जटाधरः॥ द्विवचनान्तोऽयं शब्दः॥

जघनेफला, स्त्री, (जघने इव मध्यभागे फलमस्याः।) काकोडुम्बरिका। इत्यमरः। २। ४। ६१॥

जघन्यः, त्रि, (कुटिलं हन्यते निन्द्यते इति। हन + यङन्तात् अचो यत्। अनित्यमागमशासनमिति कुगतोऽनुनासिकान्तस्येति न लुक्। यद्वा, जघनमिव। "शाखादिभ्यो यत्।" ५। ३। १०३। इति यत्।) चरमः। (यथा, वैद्यकचक्रपाणिसंग्रहे ज्वराधिकारे।
"उत्तमस्य पलं मात्रा त्रिभिरक्षैश्च मध्यमे।
जघन्यस्य पलार्द्धेन स्नेहक्वाथौषधेषु च॥")
गर्हितः। (यथा, महाभारते। २। २५। १२।
"तत्र द्यूतमभवन्नो जघन्यं
तस्मिन् जिताः प्रव्रजिताश्च सर्व्वे॥"*॥
जघने कटिदेशे भवम्। दिगादित्वात् यत्।)
मेहने, क्ली। इति मेदिनी। ये, ८३॥ पुं, शूद्रः। इति शब्दरत्नावली॥ (हीनजातिमात्रम्। यथा, मनौ। ८। ३६६।
"उत्तमां सेवमानस्तु जघन्यो वधमर्हति॥"
"हीनजातिस्तूत्तमजातीयां कन्यामिच्छन्तीमनिच्छन्तीं वा गच्छन् जातिपर्य्ययाल्लिङ्गच्छेदनमारणात्मकं वधमर्हति॥" इति तट्टीकायां कुल्लूकभट्टः॥*॥ पृष्ठभागः। यथा, रामायणे। २। १०४। २९।
"ततो जघन्यं सहितैः स्वमन्त्रिभिः
पुरप्रधानैश्च तथैव सैनिकैः।
जनेन धर्म्मज्ञतमेन धर्म्मवानुपोपविष्टो भरतस्तदाग्रजम्॥"
"जघन्यं जघनभागं पृष्ठभागमाश्रितः सन्।"
इति तट्टीकायां रामानुजः॥*॥ राजाश्चचरविशेषः। यथा, बृहत्संहितायाम्। ६९। ११, १२—१४।
"पञ्चापरे वामनको जघन्यः
कुब्जोऽपरो मण्डलकोऽथ साची।
पूर्व्वोक्तभूपानुचरा भवन्ति
सङ्कीर्णसंज्ञाः शृणु लक्षणैषाम्॥"
"माल्यवसेवी तु जघन्यनामा
शङ्खेन्दुकुन्दप्रसवः सुगन्धिः।
मृद्वङ्गवाक् मिथुनः कविश्च
कृष्णच्छविः शूलकराङ्कुलीकः॥
क्रूरो धनी स्थूलमतिः प्रतीतस्ताम्रच्छविः स्यात् परिहासशीलः।
उरोऽङ्घ्रिहस्तेष्वपि शक्तियुक्तः
परस्वधाङ्कश्च जघन्यनामा॥")

जघन्यजः, पुं स्त्री, (जघन्ये चरमे जायते इति। जन् + "सप्तम्यां जनेर्डः।" ३। २। ९७। इति डः।) शूद्रः। कनिष्ठे, त्रि॥ इति मेदिनी॥ जे, ३२॥ (यथा, महाभारते। १। ६५। १६।
"एकादशस्तथा त्वष्टा द्वादशो विष्णुरुच्यते।
जघन्यजस्तु सर्व्वेषामादित्यानां गुणाधिकः॥")

जघ्निः, पुं, (हन्यते इति। हन + "आदृगमहनेति।" ३। २। १७१। इति किन् द्वित्वञ्च।) हननयोग्यास्त्रम्। इति संक्षिप्तसारः॥ (यथा, ऋग्वेदे। ९। ६१। २०।
"जघ्निर्वृत्रममित्रियं सस्निर्वाजं दिवे दिवे॥")

जघ्नुः, त्रि, (हन्तीति। हन वधे + "कुर्भ्रश्च।" उणां।१।२३। चकारात् हन्तेरपि कुर्द्वित्वञ्च।) हन्ता। हननकर्त्ता। इत्युणादिकोषः॥

जङ्गमः, त्रि, (पुनः पुनर्गच्छतीति। गम् + यङ् + अच्।) अस्थावरः। गतिशक्तिविशिष्टः। तत्पर्य्यायः। चरिष्णुः २ चरः ३ जगत् ४ इङ्गः ५ चराचरः ६। इत्यमरः। ३। १। ७४॥ (यथा, रघौ। २। ४४।
"मान्यः स मे स्थावरजङ्गमानां
सर्गस्थितिप्रत्यवहारहेतुः॥"
"ओषधयः स्थावरा द्विविधाः स्थावरा जङ्गमाश्च।"
"जङ्गमास्तवपि चतुर्व्विधा जरायुजाण्डजस्वेदजोद्भिज्जाः। तत्र पशु-मनुष्य-व्यालादयो जरायुजाः। खग-सर्प-सरीसृप-प्रभृतयोऽण्डजाः। कृमिकीटपिपीलिकाप्रभृतयः स्वेदजाः। इन्द्रगोपमण्डूकप्रभृतय उद्भिज्जाः॥" इति सुश्रुते सूत्रस्थाने प्रथमेऽध्याये॥)

जङ्गमकुटी, स्त्री, (जङ्गमा गतिशक्तिविशिष्टा कुटी गृहमिव।) छत्रम्। इति त्रिकाण्डशेषः॥

जङ्गलं, त्रि, (पुनः पुनरतिशयेन वा गलतीति। गल + यङ् + अच्। पृषोदरादित्वात् साधुः।) निर्ज्जलदेशः। इति शब्दरत्नावली॥ निर्ज्जनस्थानम्। पिशिते, क्ली। इति मेदिनी। ले, ६३॥

जङ्गालः, पुं, (जङ्गं कुटिलगतिं अलति प्राप्नोतीति। अल + "कर्म्मण्यण्।" ३।२।१ इत्यण्।) सेतुविशेषः। जाङ्गाल इति भाषा॥ तत्पर्य्यायः। आलिः २ सङ्गरः ३ सेतुः ४ संवरः ५। इति जटाधरः॥

जङ्गुलं, क्ली, विषम्। इति त्रिकाण्डशेषः॥

जङ्घा, स्त्री, (जङ्घन्यते कुटिलं गच्छतीति। हन गतौ वधे च यङ् लुगन्तात् + "अचोऽप्यपीति।"

जटाला, स्त्री, (जटाऽस्यस्या इति। जटा+"सिध्मादिभ्यश्च। ५।२।९७। इति लच्। ततो ऽजादित्वात् टाप्।) जटामांसी। इति राजनिर्घण्टः॥ (विवरणमस्या जटामांसीशब्दे ज्ञातव्यम्॥)

जटावती, स्त्री, (जटा विद्यतेऽस्याः। जटा+मतुप्। मस्य वः स्त्रियां ङीप् च।) जटामांसी। इति राजनिर्घण्टः॥

जटावल्ली, स्त्री, (जटेव वल्ली।) रुद्रजटा। गन्धमांसी। इति राजनिर्घण्टः॥

जटिः, स्त्री, (जटति परस्परं संलग्ना भवतीति। जट+"सर्व्वधातुभ्य इन्।" उणां। ४।११७। इति इन्।) प्लक्षवृक्षः। इति शब्दरत्नावली॥ जटा। समूहः। इत्युणादिकोषः॥

जटिलः, पुं, (जटा अस्त्यस्येति। जटा+"लोमादिपामादिपिच्छादिभ्यः शनेलचः।" ५।२।१००। इति इलच्।) सिंहः। इति शब्दचन्द्रिका॥ (ब्रह्मचारी। यथा, मनुः। ३।१५१।
"जटिलञ्चानधीयानं दुर्व्वलं कितवन्तथा॥"
"जटिलो ब्रह्मचारी।" इति तट्टीकायां कुल्लूकभट्टः॥) जटायुक्ते, त्रि। इति मेदिनी। ले,९२॥ (यथा, कुमारे। ५।३०।
"विवेश कश्चिज्जटिलस्तपोवनं
शरीरबद्धः प्रथमाश्रमो यथा॥")

जटिला, स्त्री, (जटिल+अजादित्वात् टाप्।) जटामांसी। इत्यमरः। २।४।१३४॥
("जटामांसी भूतजटा जटिला च तपस्विनी॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥) पिप्पली। इति मेदिनी॥ वचा। उच्चटा। इति रत्नमाला। दमनकवृक्षः। इति राजनिर्घण्टः॥ राधिकाश्वश्रूः। यथा, गौरगणोद्देशे।
"जटिला राधिकाश्वश्रूः कार्य्यतोऽपि पृथग्‌देव सम्॥"
(ऋषिपत्नीविशेषः। यथा, महाभारते।१।१९७।१४।
"श्रूयते हि पुराणेऽपि जटिला नाम गौतमी।
ऋषीनध्यासितवती सप्त धर्म्मभृताम्बरा॥")

जटी, स्त्री, (जट+"कृदिकारादक्तिनः।" ४।१।४५। इत्यस्य वार्त्तिकोक्त्या वा ङीष्।) पर्क्कटीवृक्षः। इति शब्दरत्नावली॥ जटामांसी। इति रत्नमाला॥

जटी [न्], पुं, (जटा अस्त्यस्येति। जटा+इनिः।) प्लक्षवृक्षः। इत्यमरः। २।४।३२॥ (यथा,—
"प्लक्षो जटी पर्क्कटी च पर्क्कटी च स्त्रियामपि।"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥ स्कन्दस्यानुचरविशेषः। यथा, महाभारते। ९।४५।५८।
"ज्वालाजिह्वः करालश्च शितकेशो जटी हरिः॥")
जटाविशिष्टे, त्रि। (यथा, महाभारते।७।५०।४३
"ततो हरो जटी स्थाणुर्निशाचरपतिः शिवः॥")

जटुलः, पुं, (जटति देहे संहतो भवतीति। जट संहतौ+बाहुलकादुलच्।) जतुकम्। जड़ुल इति भाषा॥ तत्पर्य्यायः। कालकः २ पिप्लुः ३। इत्यमरः। २।६।४९॥

जठरं, त्रि, (जटति संहतीभवतीति। जट+बाहुलकादरः टान्तादेशश्च। यद्वा, जायते इति। जन+"जनेररष्ठ च।" उणां ५।३८। इति अरः ठश्चान्तादेशः।) बद्धम्। कठिनम्। इति शब्दरत्नावली॥ (यथा, शान्तिशतके। ४।१३।
"इदानीमक्षाकं जठरकमठपृष्ठकठिना
मनोवृत्तिस्तत् किं व्यसनिविमुखेव चपयसि॥")

जठरः, पुं स्त्री, (जायते गर्भो मलं वा अस्मिन्निति। जन+"जनेररष्ठ च।" उणां। ५।३८। इति अरः ठश्चान्तादेशः।) उदरम्। इति मेदिनी॥ (यथा, हितोपदेशे। २।४४।
"एकतः सेवकेभ्यः जठरेण कृताशनम्।
स्वामिनं सर्व्वभावेन परलोकममायया॥"
देशविशेषे, पुं। स तु कूर्म्मविभागे आग्नेय्यां दिशि वर्त्तते। यथा, बृहत्संहितायाम्। १४।८।
"आग्नेय्यां दिशि कोशलकलिङ्गवङ्गो
पवङ्गजठराङ्गाः॥"
तथाच महाभारते। ६।९।४२।
"अत ऊर्द्ध्वं जनपदान् निबोध गदतो मम।"
इत्युपक्रम्य,—
"जठराः कुकुराश्चैव सदशार्णाश्च भारत!॥"
इत्युक्तवान्॥
पर्व्वतविशेषः। यथा, भागवते। ५।१६।२७।
"जठरदेवकूटौ मेरुं पूर्व्वेणाष्टादशयोजनसहस्रमुदगायतौ द्विसहस्रपृथुतुङ्गौ भवतः॥"
उदररोगविशेषः।
"रागो जल्म बलीनाशो जठरे जठरेषु तु।"
इति निदानस्थाने द्वादशेऽध्याये वाभटेनोक्तम्। एतत्सम्प्राप्तिर्यथा, सुश्रुते निदानस्थाने ७ अध्याये।
"कोष्ठादुपर्य्युपचयद्रससारो
निःसृत्य दुष्टोऽनिलवेगयुक्तः।
त्वचः समुन्नम्य शनैः समन्ता-
द्विवर्द्धमानो जठरं करोति॥")

जठरतुत्, पुं, (तुदतीति। तुद्+क्विप्। ततः षष्ठीतत्पुरुषः। एतत्सेवनेनोदरभङ्गादेरस्य तथात्वम्।) आरग्वधवृक्षः। इति शब्दचन्द्रिका॥

जठरामयः, पुं, (जठरस्य आमयो रोगः।) जलोदररोगः। इति राजनिर्घण्टः॥ (अतीसाररोगश्च। तस्य चिकित्सा यथा,—
"कपित्थमध्यं लीढ्वा तु सव्योषक्षौद्रशर्करम्।
कट्फलं मधुयुक्तं वा मुच्यते जठरामयात्॥"
इति चरके चिकित्सास्थाने दशमेऽध्याये॥)

जडं, क्ली, (जलति लोकान् जीवयतीति। जल+अच्। डलयोरैक्यात् लस्य डत्वम्।) जलम्। इत्यमरटीकायां रायमुकुटः॥ (जलति घनीभवतीति।) सीसकम्। इति राजनिर्घण्टः॥ (अचेतनपदार्थानां स्वरूपम्। यदुक्तं पञ्चदश्याम्। ६।१२७।
"अविद्यालघटादीनां यत् स्वरूपं जडं हि तत्॥")

जडः, त्रि, (जलति बुद्धिशक्तिमाच्छादयतीति। जल आच्छादने+अच्।) हिमग्रस्तः। (शीतलः। यथा, रघौ। ३।६८।
"पराङ्मुखं सर्वजड़ेन पाणिना
तदीयमङ्गं कुलिशव्रणाङ्कितम्॥"
"सर्वजड़ेन सर्वशिशिरेण।" इति तट्टीकायां मल्लिनाथः॥) मूकः। (यथा, मनौ। २।११०।
"नापृष्टः कस्यचिद्‌ब्रूयात् न चान्यायेन पृच्छतः।
जानन्नपि हि मेधावी जड़वल्लोक आचरेत्॥"
बधिरः। यथा, तत्रैव। ९।२०१।
"उन्मत्तजड़मूकाश्च ये च केचिन्निरिन्द्रियाः॥"
तथा तत्रैव। ८।३९४।
"अन्धो जड़ः पीठसर्पी सप्तत्या स्थविरश्च यः॥"
"अन्धो बधिरः पङ्गुः सप्ततिवर्षवयस्कः।" इति तट्टीकायां कुल्लूकभट्टः॥) अप्रज्ञः। इति मेदिनी। डे, १४॥ (यथा, विक्रमोर्व्वश्याम् १ अङ्के।
"अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्म्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः॥"
निष्पन्दः। यथा, रघौ। २।४२।
"अलोलशस्त्राख्यकवीचनेन
वज्रं मुमुक्षन्निव वज्रपाणिः॥"
मोहितः। यथा, तत्रैव।८।७५।
[अथ तं सवनाय दीक्षितः प्रणिधानाद्‌गुरुराश्रमस्थितः।
अभिषङ्गजड़ं विजज्ञिवान्
इति शिष्येण किलान्वबोधयत्॥")

जड़क्रियः, त्रि, (जड़स्य मोहितस्येव क्रिया कार्य्यं यस्य।) दीर्घसूत्री॥ चिरक्रियः। इति हलायुधः॥

जड़ता, स्त्री, (जड़स्य भावः। जड़+भावे तल्।) जाड्यम्। तत्पर्य्यायः। स्तैमित्यम् २ शीतलत्वम् ३ अपाटवम् ४। इति राजनिर्घण्टः (यथा, रघुः। ९।४६।
"अनयदासनरज्जुपरिग्रहे
भुजलतां जड़तामबलाजनः॥"
इयं हि व्यभिचारिभावविशेषः। अस्या लक्षणं यथा, साहित्यदर्पणे। ३।१४४।
"अप्रतिपत्तिर्जड़ता स्यादिष्टानिष्टदर्शनश्रुतिभिः।
अनिमिषनयननिरीक्षणतूष्णीम्भावादयस्तत्र॥")
विरहदुःखेन जीवनमात्रस्थितिः। इति रसमञ्जरी॥

जड़ा, स्त्री, (जड़यति तत्करोतीति णिजन्तात् अच् ततष्टाप्।) शूकशिम्बी। इत्यमरः॥ भूम्यामलकी। इति रत्नमाला॥

जड़िमा, [न्] पुं, (जड़स्य भावः। "वर्णदृढादिभ्यः ष्यञ् च।" ५।१।१२३। इति इमनिच्।) जड़ता। तस्य लक्षणं यथा,—
"इष्टानिष्टापरिज्ञानं यत्र प्रश्नेष्वनुत्तरम्।

पथ्यैवमयवाभावो जतुका सोऽभिधीयते ॥"

[illegible] ॥

जतुक:, पुं, (जतुन: पृषोदरादित्वात् टस्य कत्वम् ।) देवदारुतिलक: । इति हेमचन्द्र: ॥

जतु, क्ली, (जायते वृक्षादिभ्य इति । जन + "असि-पसिहनिमिमसिजनाभिस्तु ।" उणां १ । ९६ । इति तु: सोऽन्तादेशश्च ।) वृक्षनिर्यासविशेष: । जौ इति गाला इति च भाषा ॥ तत्पर्य्याय: । राक्षा २ लाक्षा ३ याव: ४ अलक्त: ५ द्रुमामय: ६ । इत्यमर: ।२।६।१२५॥ रङ्गा ७ । इति रभस: ॥ कीटजा ८ क्रिमिजा ९ जतुका १० जन्तुका ११ गवाधिका १२ । इति रत्नमाला ॥ जतुकम् १३ यावक: १४ अलक्तक: १५ रक्त: १६ । इति शब्दरत्नावली ॥ पलङ्कषा १७ क्रिमि: १८ वरवर्णिनी १९ । इति जटाधर: ॥ (यथा, महाभारते । १ । १४७ । १३ ।
"निर्ममे सोऽस्य वस्त्रागारं वर्ज्जजतुविमिश्रितम् ॥")

जतुकं, क्ली, (जतु इव कायतीति । कै + क: ।) हिङ्गु । (जतु एव । स्वार्थे कन् ।) लाक्षा । इति मेदिनी । के, ६१ ॥

जतुका, स्त्री, (जतु इव आत्मना कायतीति । कै + "आतोऽनुपसर्गे क: ।" ३ । २ । ३ । इति क: ।) जतीनामगन्धद्रव्यम् । इत्यमरटीकायां भरत: ॥ चर्म्मचटिका । इति शब्दरत्नावली ॥ (यथा, वैद्यकचक्रपाणिसंग्रहे उपकाराधिकारे ।
"जतुकाप्रकृता तद्वत्कृष्णा वक्ररोमभि: ।
अपस्मारकरी ज्ञेयो जनविज्ञाधिभिर्नृभि: ॥")
पर्पटी । इति भावप्रकाश: ॥ लताविशेष: । सा तु मालवे प्रसिद्धा । तस्या: पर्य्याया: । जतुकारी २ जननी ३ चक्रवर्त्तिनी ४ तिर्य्यक्फला ५ निशान्धा ६ बहुपुत्री ७ सुपुत्रिका ८ राजहंसा ९ अजेष्टा १० कपिकच्छुफलोपमा ११ रञ्जनी १२ कृष्णवल्ली १३ भ्रमरी १४ शम्पावल्लिका १५ विद्युल्लिका १६ श्यामवल्ला १७ मधिपर्णा १८ सुवर्चिका १९ तनवल्ली २० दीर्घफला २१ । अस्या गुणा: । शिशिरत्वम् । तिक्तत्वम् । रक्तपित्तकफदाहक्षयविषनाशित्वम् । रुचिकारित्वम् । दीपनत्वञ्च । इति राजनिर्घण्ट: ॥ जतुकापि पाठ: । निशान्धाशब्दद्वयोरिव क्रमेण निशाका इत्यपि च पाठ: ॥ (लाक्षा । तत्पर्य्याया यथा,—
"कीटजा क्रिमिजा लाक्षा जतुका च गवाधिका ॥"
इति वैद्यकरत्नमालायाम् ॥)

जतुकारी, स्त्री, (जतु करोतीति । जतु + कृ + "कर्म्मण्यण् ।" ३ । २ । १ । इत्यण् तत: स्त्रियां ङीप् ।) जतुकालता । इति राजनिर्घण्ट: ॥ (गुणादयोऽस्या जतुकाशब्दे ज्ञातव्या: ॥)

जतुकृत्, स्त्री, (जतु करोति उत्पादयतीति । कृ + क्विप् । अतो: कृदिति वा ।) जतीनामगन्धद्रव्यम् । इत्यमर: । २ । ४ । १५३ ॥
(अस्या: पर्य्याया यथा,—
"पर्प्पटी रञ्जना कृष्णा जतुका जननी जनी ।
जतुकृच्चाग्निसंस्पर्शा जतुकाचक्रवर्त्तिनी ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

जतुकृष्णा, स्त्री, (जतु इव कृष्णा ।) पर्पटी । इति भावप्रकाश: ॥

जतुनी, स्त्री, (जतु इव नयति जतुकाकारेण प्रापयति स्वशिरश्चमिति । नी + क्विप् । अस्या: संज्ञेयात् प्रसङ्ग जतुमद्गणस्वभावम् ।) चर्म्मचटिका । इति त्रिकाण्डशेष: ॥

जतुपुत्त्रक:, पुं, (जतुनिर्म्मित: पुत्त्र इव । स्वार्थे कन् ।) पाशकगुटिका । नय: । इति त्रिकाण्डशेष: ॥

जतुमणि:, पुं, क्षुद्ररोगविशेष: । (जडुल इति भाषा ॥) तस्य निदानं यथा,—
"समसुत्रमनजं मकर्णं लपरक्तजम् ।
सहजं लक्ष्म चैकेषां लक्ष्यो जतुमणिश्च स: ॥"
इति माधवकर: ॥
तच्चिकित्सा यथा—
"चर्म्मकीलं जतुमणिं मषकान् तिलकालकान् ।
उत्कृत्य शस्त्रेण दहेत् क्षाराग्निभ्यामशेषत: ॥"
इति भावप्रकाश: ॥

जतुरस:, पुं, (जतुनो रस: ।) अलक्तक: । इति राजनिर्घण्ट: ॥ (विवृतिरस्यालक्तकशब्दे ज्ञातव्या ॥)

जतूका, स्त्री, (जतुका निपातनात् दीर्घ: ।) जतीनामगन्धद्रव्यम् । इत्यमर: । २ । ४ । १५३ ॥ चर्म्मचटी । इति शब्दरत्नावली ॥

जत्रु, क्ली, (जायते बाहुरस्मात् । जन् + "जत्र्वादयश्च ।" उणां ४ । १०२ । इति नकारस्य तकारश्च ।) स्कन्धसन्धि: । इत्यमर: । २ । ६ । ७८ ॥ मागुरा इति भाषा ॥ (यथा, महाभारते । ३ । १७ । २२ ।
"तै: स विद्धो महाबाहु: प्रद्युम्न: समरे स्थित: ।
जत्रुदेशे भृशं वीरो ववामीऽरुधिरं तदा ॥")

जत्रुकं, क्ली, (जत्रु एव । स्वार्थे कन् ।) जत्रु । इति शब्दरत्नावली ॥

जत्वश्मकं, क्ली, (जतुरूपमश्मकम् ।) शिलाजतु । इति राजनिर्घण्ट: ॥

जन, ई म य ङ जनौ । इति कविकल्पद्रुम: ॥ (दिवा-आत्मं-अकं-सेट् ।) ई, जात: । म, जनयति । य ङ, जायते जज्ञे । जनिर्जन्म । प्रादुर्भाव इति प्राञ्च: । प्रादुर्भाव: स्फुटीभाव: । प्राकाश्यं प्रादुराविः स्यादित्यमर: । बीजादङ्कुरो जायते पत्रकाण्डादिभेदेन प्रकाश्यते इत्यर्थ: । प्रादुर्भावोऽसदुत्पत्तिरिति केचित् । घटो जायते । इति दुर्गादास: ॥

जन, म कि र जनौ । इति कविकल्पद्रुम: ॥ (ह्वा-पर-अकं-सेट् ।) म, जनयति । कि, जजन्ति । ह्वादिक: । इति दुर्गादास: ॥

जन:, पुं, (जायते इति । जन + अच् ।) लोक: । (यथा, महाभारते । १ । १४९ । ९ ।
"अथ प्रवाति तुमुले निशि सुप्ते जने तदा ।
तदुपादीपयत् भीम: शेते यत्र पुरोचन: ॥")
महर्लोकादूर्द्ध्वलोक: । पामर: । इति मेदिनी । ने, ६ ॥ (असुरविशेष: । अस्यार्द्वेश इति शब्ददर्शनात् ॥)

जनक:, पुं, (जनयतीति । जन + णिच् + ण्वुल् ।) पिता । राजभेद: । स तु मिथिलाधिपति: । इति मेदिनी । के, ९० ॥ इक्ष्वाकुकुलपुत्रो निमिर्वशिष्ठं त्यक्त्वा यज्ञं कृतवान् वशिष्ठस्तद्यज्ञागमनागस्य राजानं शापयामास राजा तदा विनिद्र आसीत् । मुनिस्तु रोषात् त्वं विदेहो भव इत्युक्त्वा तमभिशशाप । तत:,—
"ऋद्धा विदेहं राजानमृषय: सर्व्व एव ते ।
तस्य ते याजयामासुर्यावद्दीक्षा मनीषिण: ॥
शरीरस्यापि तं देहमरक्षन्मुनिपुङ्गवा: ।
गन्धैर्माल्यैश्च वस्त्रैश्च पूज्यमानं तदद्भुतम् ॥
अथयोऽपि महात्मानो निमिदेहं समन्थिरे ।
अरणिस्थस्य देहात्तु मन्थानेनाथि पार्थिवे ॥
मन्त्रहोमैर्महात्मान: पुत्त्रहेतोर्निमेस्तदा ।
अरण्यां मथ्यमानायां प्रादुर्भूतो महांश्च स: ॥
अतो मिथिरिति ख्यातो जननाज्जनकोऽभवत् ।
विदेहस्त्वभवद्यस्मात्तन्नाम्ना स महातपा: ॥
तस्माद्विदेहा: प्रोच्यन्ते सर्व्वे तद्वंशजा नृपा: ।
एवं विदेहराजस्तु पूर्व्वजो जनकोऽभवत् ॥
मिथिर्नाम महावीर्य्यो येन सा मिथिलाभवत् ॥"
इति रामायणम् ॥
(ऋषिविशेष: । स तु वैद्यसन्देहभञ्जनग्रन्थस्य प्रणेता । यथा, ब्रह्मवैवर्त्ते । १ । १६ । १९ ।
"चकार जनको योगी वैद्यसन्देहभञ्जनम् ॥"
शम्बरासुरस्य पुत्त्रविशेष: । यथा, हरिवंशे । १६१ । ४४ ।
"श्रुत्वा तु शम्बरात्मजं हतानि शम्बरस्य च ।
सप्तहा निर्ययु: शूरा: प्रद्युम्नवधकाङ्क्षया ॥"
इत्युपक्रम्याह ।
"क्षिनकश्चोऽतिसेनश्च सेनको जनकस्तत: ॥")
उत्पादके, त्रि ॥ (यथा, ब्रह्मवैवर्त्ते ।१।१६।२७।
"जनक: सर्व्वरोगाणां दुर्व्वारो दारुणो ज्वर: ॥")

जनकतनया, स्त्री, (जनकस्य विदेहनृपतेस्तनया ।) सीता । इति रामायणम् ॥ (यथा, मेघदूते ।१।
"यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्य्याश्रमेषु ॥")

जनकनन्दिनी, स्त्री, (जनकस्य नन्दिनी ।) सीता । इति रामायणम् ॥

जनकसुता, स्त्री, (जनकस्य सुता ।) सीता । इति रामायणम् ॥

जनकात्मजा, स्त्री, (जनकस्य आत्मजा ।) सीता । इति शब्दरत्नावली ॥ (यथाह कश्चित् ।
"युद्धतटे लक्ष्मणपञ्चनाथि ।
शिरो मदीयं यदि यातु यातु ।
नमामि नूनं जनकात्मजायै
दशाननेनापि दशाननानि ॥")

जनकारी, [न्] पुं, (जनान् किरति आच्छादयति स्ववर्णेनेति । कृ आच्छादने + णिनि: ।) अलक्तक: । इति राजनिर्घण्ट: ॥

जनङ्गमः, पुं, ( जनेभ्यो गच्छतीति । “गमश्च ।” ३ । २ । ४७ । खच् मुमागमश्च ।) चाण्डालः । इत्यमरः । २।१०।१९ ॥ (यथा, माघे ।१५।६५ ।
“अवधीच्छ्वजनङ्गम इवैष
यदि हतवान् इमं ननु ।
स्वर्गमशुचिवपुरर्हति न
प्रतिमानजान्तु नितरां नृपोचिताम् ॥”)

जनता, स्त्री, ( जनानां समूहः । जन+“ग्राम-जनबन्धुभ्यस्तल् ।” ४ । २ । ४३ । इति तल् ।) जनसमूहः । इत्यमरः । ३ । २ । ४२ ॥ (यथा, रघौ । ११ । ८२ ।
“तावुभावपि परस्परस्थितौ
वर्द्धमानपरिहीनतेजसौ ।
पश्यति स्म जनता दिनात्यये
पार्व्वणौ शशिदिवाकराविव ॥” * ॥
जनस्य भावः । ) जनत्वञ्च ॥

जननं, क्ली, (जन्यतेऽस्मिन्निति । जन+अधिकरणे ल्युट् । ) वंशः । ( जन+भावे ल्युट् । ) जन्म । इति मेदिनी । ने, ६६ ॥ ( यथा, महानिर्व्वाणतन्त्रे । ३ । ५० ।
“जननमरणभीतिभ्रंशि सच्चित्स्वरूपं
सकलभुवनबीजं ब्रह्म चैतन्यमीडे ॥”
उत्पत्तिः । यथा, कुमारे । १ । ४२ ।
“अन्योन्यशोभाजननाद्‌ बभूव
साधारणो भूषणभूष्यभावः ॥”
पुं, जनयति उत्पादयति जीवानिति । जन+णिच्+कर्त्तरि ल्युः । विष्णुः । यथा, महाभारते । १३ । १४९ । ११४ ।
“जननो जनजन्मादिर्भीमो भीमपराक्रमः ॥”
“जन्तून् जनयन् जननः ।” इति तद्भाष्यम् ॥
जनयतीति । जनि+ल्युः । उत्पादके, त्रि । यथा, महाभारते । ३ । ३६ । ३५ ।
“एकश्चिरवासो हि न प्रीतिजननो भवेत् ॥”)

जननिः, स्त्री, ( जनयति प्राणसुखमिति । जन+णिच्+बाहुलकात् अनिः । ) जनीनामगन्धद्रव्यम् । इति शब्दरत्नावली ॥

जननी, स्त्री, (जनयतीति । जनि+बाहुलकादनिः । कृदिकारादिति वा ङीष् । यद्वा, कृत्यल्युटो बहुलमिति ल्युट् टित्वात् ङीप् । ) माता । ( यथा, पञ्चतन्त्रे । १ । ३६ ।
“निरतिशयं गरिमाणं
तेन जनन्याः स्मरन्ति विद्वांसः ।
यत् कमपि वहति गर्भं
महतामपि यो गुरुर्भवति ॥” )
दया । इति मेदिनी । ने, ६६ ॥ जनीनामगन्धद्रव्यम् । ( पर्य्याया यथा,—
“पर्पटी रञ्जना कृष्णा जतुका जननी जनी ।
जतुकृष्णाग्निसंस्पर्शा जतुका चक्रवर्त्तिनी ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
चर्म्मचटी । इति शब्दरत्नावली ॥ यूथिका । इति शब्दचन्द्रिका ॥ कटुका । मञ्जिष्ठा । अलक्तकः । जटामांसी । इति राजनिर्घण्टः ॥

जनपदः, पुं, ( जनस्य लोकस्य पदं आश्रयस्थानं यत्र । जनः पदं यस्य वर्त्तते वा । ) देशः । ( यथा, चाणक्यशतके । ११ ।
“त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥”
जनपदनामानि महाभारते भीष्मपर्व्वणि ९ अध्याये कथितानि अतस्तत्रैव विशेषतो द्रष्टव्यानि ॥ )
जनः । इति मेदिनी । दे, ४८ ॥

जनप्रवादः, पुं, ( जनेषु लोकेषु प्रवादोऽपवादः ।) लोकापवादः । तत्पर्य्यायः । कौलीनम् २ विगानम् ३ वचनीयता ४ । इति हेमचन्द्रः । ।२।१८४ ॥ ( यथा, महाभारते । १।७२।१६ ।
“जनप्रवादान् सुबहून् शृण्वन्नपि नराधिपः ।
द्विया च धर्म्मसंयोगात् पार्थो द्यूतमियात्
पुनः ॥”)

जनप्रियः, पुं, ( जनानां प्रियः । ) धान्यकम् । शोभाञ्जनवृक्षः । इति राजनिर्घण्टः ॥ (लोकप्रिये, त्रि ॥ )

जनमेजयः, पुं, (जनान् प्रजुजनान् एजयति प्रतापैः कम्पयतीति । एजृ कम्पने+णिच्+“एजेः खश् ।”३।२।२८। इति खश् ततो मुमागमः ।) परीक्षितराजपुत्त्रः । तत्पर्य्यायः । राजर्षिः २ पारीक्षितः ३ । इति त्रिकाण्डशेषः ॥ ( यथा, देवीभागवते । २ । ११ । ६ ।
“पौरजानपदा लोकाश्चक्रुस्तं नृपतिं शिशुम् ।
जनमेजयनामानं राजलक्षणसंयुतम् ॥”
जन्मेजय इति पाठोऽपि क्वचित् दृश्यते । तद्विवरणन्तु जन्मेजयशब्दे द्रष्टव्या ॥
अयं हि चतुरशीतिवर्षाणि राज्यं कृतवान् । तत्र अश्वमेधादिकं बहुयज्ञं कृत्वा पितृवधामर्षात् सर्पसत्रं चकार । अन्तेवासौ जरत्कारुपुत्त्रेण आस्तीकेन प्रार्थितः सर्पसत्रात् विरराम ततश्चित्तप्रशमनार्थं भारतादिकं श्रुतवान् । वृत्तान्तश्चैषः क्रमशः प्रदर्श्यते । यथा, राजावल्यां १ परिच्छेदे ।
“पारीक्षितस्तदा राजा नीतिमान्नीतिभीतितः ।
पृथिवीं पालयामास निवसन् गजसाह्वये ।
कृत्वा पितृवधामर्षात् सर्पेष्टिं मुनिभिः समम् ।
नाशयामास सर्पाणां कुलानि कुलनायकः ॥
हयमेधक्रतावस्य सम्भारैर्बहुविस्तरैः ।
ब्रह्महत्याभवत्तत्र यागेऽकालकृते तदा ॥
तत् पापमभवत् तस्य दारुणं पृथिवीपतेः ।
वैशम्पायनतो वेदव्यासशिष्यात्तपोनिधेः ।
श्रुत्वा भारतमाख्यानं तत्पापात् मुक्तिमाप सः ।
चतुरशीतिवर्षाणि कृत्वा राज्यं सुनिर्म्मलम् ।
शतानीकं सुतं राज्ये संस्थाप्यैव दिवं गतः ॥”
सोमश्रवसमृषिमसौ पौरोहित्याय वृतवान् । तत्कथा यथा, महाभारते । १।३।१—२० ।
“जनमेजयः पारिक्षितः सह भ्रातृभिः कुरुक्षेत्रे दीर्घसत्रमुपास्ते । तस्य भ्रातरस्त्रयः श्रुतसेन उग्रसेनो भीमसेन इति । तेषु तत्सत्रमुपासीनेष्वागच्छत् सारमेयः । स जनमेजयस्य भ्रातृभिरभिहतो रोरूयमाणो मातुः समीपमुपागच्छत् । तं माता रोरूयमाणमुवाच किं रोदिषि केनास्यभिहत इति । स एवमुक्तो मातरं प्रत्युवाच जनमेजयस्य भ्रातृभिरभिहतोऽस्मीति । तं माता प्रत्युवाच व्यक्तं त्वया तत्रापराद्धं येनास्यभिहत इति । स तां पुनरुवाच नापराध्यामि किञ्चिन्नावेक्षे हवींषि नावलिहे इति । तच्छ्रुत्वा तस्य माता सरमा पुत्त्रदुःखार्त्ता तत् सत्रमुपागच्छद्यत्र स जनमेजयः सह भ्रातृभिर्दीर्घं सत्रमुपास्ते । स तया क्रुद्धया तत्रोक्तोऽयं मे पुत्रो न किञ्चिदपराध्यति नावेक्षते हवींषि नावलेढि किमर्थमभिहत इति । न किञ्चिदुक्तवन्तस्ते सा तानुवाच यस्मादयमभिहतोऽनपकारी तस्माददृष्टं त्वां भयमागमिष्यतीति । जनमेजय एवमुक्तो देवशुन्या सरमया भृशं सम्भ्रान्तो विषण्णश्चासीत् । स तस्मिन् सत्रे समाप्ते हास्तिनपुरं प्रत्येत्य पुरोहितमनुरूपमन्विच्छमानः परं यत्नमकरोत् यो मे पापकृत्यां शमयेदिति । स कदाचिन्मृगयां गतः पारीक्षितो जनमेजयः कस्मिंश्चित् स्वविषये आश्रममपश्यत् । तत्र कश्चिदृषिरासाञ्चक्रे श्रुतश्रवा नाम तस्य तपस्यभिरतः पुत्र आस्ते सोमश्रवा नाम । तस्य तं पुत्रमभिगम्य जनमेजयः पारीक्षितः पौरोहित्याय वव्रे । स नमस्कृत्य तमृषिमुवाच भगवन्नयं तव पुत्रो मम पुरोहितोऽस्त्विति । स एवमुक्तः प्रत्युवाच जनमेजयं भो जनमेजय ! पुत्रोऽयं मम सर्प्यां जातो महातपस्वी स्वाध्यायसम्पन्नो मत्तपोवीर्य्यसम्भृतो मच्छुक्रं पीतवत्यास्तस्याः कुक्षौ जातः । समर्थोऽयं भवतः सर्व्वाः पापकृत्याः शमयितुमन्तरेण महादेवकृत्याम् । अस्य त्वेकमुपांशुव्रतं यदेनं कश्चिद्ब्राह्मणः कञ्चिदर्थमभियाचेत्तं तस्मै दद्यादयं यद्येतदुत्सहसे ततो नयस्वैनमिति । तेनैवमुक्तो जनमेजयस्तं प्रत्युवाच भगवंस्तत्तथा भविष्यतीति ॥ * ॥
अस्य सर्पसत्रविवरणकथा यथा देवीभागवते । २ । ११ । ४६—६० ।
“इति तस्य वचः श्रुत्वा राजा जन्मेजयस्तदा ।
नेत्राभ्यामश्रुपातञ्च चकारातीवदुःखितः ॥
धिग्जन्म मम दुर्बुद्धेर्वृथामानकरस्य वै ।
पिता यस्य गतिं घोरां प्राप्तः पन्नगपीडितः ॥
अद्याहं मखमारभ्य करोम्यपचितिं पितुः ।
हत्वा सर्पानसंदिग्धो दीप्यमाने विभावसौ ॥
आहूय मन्त्रिणः सर्व्वान् राजा वचनमब्रवीत् ।
कुर्व्वन्तु यज्ञसम्भारं यथार्हं मन्त्रिसत्तमाः ! ॥
गङ्गातीरे शुभां भूमिं मापयित्वा द्विजोत्तमैः ।
कुर्व्वन्तु मण्डपं स्वस्थाः शतस्तम्भं मनोहरम् ॥
वेदी यज्ञस्य कर्त्तव्या समाप्य सचिवाः खलु ।
तदङ्गत्वे विधेयो वै सर्पसत्रः सुविस्तरः ॥
तक्षकस्तु पशुस्तत्र होतोत्तङ्को महामुनिः ।
शीघ्रमाहूयतां विप्राः सर्व्वज्ञा वेदपारगाः ॥
मन्त्रिणस्तु तदा चक्रुर्भूपवाक्यैर्विचक्षणाः ।

झणत्कारः, पुं, (झण + भावे अप् कारः । झणदित्य-व्यक्तशब्दस्य कारः करणं यत्र ।) अनुकरण-शब्दः । वाद्यादिध्वनिः । यथा, कालिदासः ।
"उद्वेल्लद्भुजवल्लिकङ्कणझणत्कारः क्षणं वार्य-ताम् ॥"

झम, उ अदने । इति कविकल्पद्रुमः । (भ्वां-परं-सकं-सेट् । उदित्त्वात् क्त्वावेट् ।) उ, झमित्वा झान्त्वा । इति दुर्गादासः ॥

झम्पः, पुं, (झम्पः पृषोदरादित्वात् साधुः ।) सम्पातपतनम् । झम्पः । इति जटाधरः ॥ (यथा, महावीरचरिते । [ताः ॥")
"पुच्छास्फोटस्खलत्-सजलविवरैः पातालझम्पाश्च

झम्पारुः, पुं, (झम्पं झम्पं आराति आददातीति । आ + रा + बाहुलकात् कुः ।) वानरः । इति शब्दरत्नावली ॥

झम्पाशी, [न्] पुं, (झम्पेन सम्पातेन अश्नातीति । अश + णिनिः । मत्स्यादिधारणकाले झम्पा-दानपूर्व्वकपतनादस्य तथात्वम् ।) मत्स्यरङ्ग-पक्षी । इति जटाधरः ॥

झम्पी, [न्] पुं, (झम्पो सम्पातोऽस्त्यस्येति । झम्प + "अत इनिठनौ ।" ५ । २ । ११५ । इति इनिः ।) वानरः । इति शब्दरत्नावली ॥

झरः, पुं, (झीर्यति जीर्णीभवति पतनादिस्थान-मनेनेति । झॄ + "ऋदोरप् ।" ३ । ३ । ५७ । इत्यप् ।) निर्झरः । पर्व्वतावतीर्णजलप्रवाहः । इत्यमरः । २ । ३ । ५ ॥ (समूहः । यथा, नैषधे । २ । ३२ ।
"कलसे निजहेतुदण्डजः
किमु चक्रभ्रमिकारिता गुणः ।
स तदुच्चकुचौ भवन् प्रभा-
झरचक्रभ्रममातनोति यत् ॥"
"स कलसः प्रभारूपेण कान्तिरूपेण चक्रभ्रमिं कुलालचक्रभ्रमणमातनोति जनयति । यद्वा प्रभाझरे कान्तिप्रवाहे चक्रभ्रमिं चक्रवाक-भ्रान्तिमातनोति ।" इति तट्टीका ॥)

झरा, स्त्री, (झर + टाप् ।) झरः । इत्यमर-टीकायां भरतः ॥

झरी, स्त्री, (झर + ङीष् ।) झरः । इत्यमर-टीकायां भरतः ॥

झर्च, श उक्तौ । भर्त्से । इति कविकल्पद्रुमः ॥ (तुदां-परं-सकं-सेट् ।) रेफोपधः । श, झर्चती झर्चन्ती । शत्रन्तानन्तरहितानां तुदादिपाठबलात् शत्रन्तानामादीपोरिति नुमो विभाषा वैदेय-चारवभेदश्च । भर्त्सनम् । इति दुर्गादासः ॥

झर्च्छ, श उक्तौ । भर्त्से । इति कविकल्पद्रुमः ॥ (तुदां-परं-सकं-सेट् ।) श, झर्च्छती झर्च्छन्ती । भर्त्सनम् । इति दुर्गादासः ॥

झर्झ, श उक्तौ । भर्त्से । इति कविकल्पद्रुमः ॥ (तुदां-परं-सकं-सेट् ।) श, झर्झती झर्झन्ती । भर्त्सनम् । इति दुर्गादासः ॥

झर्झरः, पुं, (झर्झ इत्यव्यक्तशब्दं रातीति । रा + कः । यद्वा, झर्झति शब्दायते इति । झर्झ + बाहुलकात् अरः ।) वाद्यविशेषः । इत्यमरः । १ । ७ । ८ ॥ चर्म्मपुटाच्छादितकाष्ठखानम् । इति तट्टीकासारसुन्दरी । झरक इति ख्यातः ।
"डिण्डिमो डेण्डुरी मौक्ती झर्झरः पटहः स्मृतः ॥"
इति भरतधृतवैकुण्ठः ॥
तत्पर्य्यायः । झल्लकी २ झली ३ झल्लरी ४ झर्झरी ५ । इति शब्दरत्नावली ॥ (यथा, हठयोगप्रदीपिकायाम् । ४ । ८५ ।
"आदौ जलधिजीमूतभेरीझर्झरसम्भवाः ॥"
झर्झति निन्दति इति । झर्झ भर्त्से + अरः ।) कलियुगम् । (झर्झरी झर्झरशब्द इवास्त्यस्येति । अच् ।) नदभेदः । इति मेदिनी । रे, १५८ । (हिरण्याक्षपुत्रविशेषः । यथा, हरिवंशे । ३ । ७९ ।
"हिरण्याक्षसुताः पञ्च विद्वांसः सुमहाबलाः ।
झर्झरः शकुनिश्चैव भूतसन्तापनस्तथा ।
महानाभश्च विक्रान्तः कालनाभस्तथैव च ॥")

झर्झरकः, पुं, (झर्झर + स्वार्थे कन् ।) कलियुगम् । इति त्रिकाण्डशेषः ॥

झर्झरा, स्त्री, (झर्झरति निन्दति इति । झर्झ भर्त्से + बाहुलकात् अरः । ततष्टाप् ।) वेश्या । इति त्रिकाण्डशेषः ॥ (जलशब्दविशेषः । यथा, काशीखण्डे । २९ । ६८ । [वती ॥")
"झिण्टीशपद्मा झाङ्कारकारिणी झर्झरा-

झर्झरी, स्त्री, (झर्झर + गौरादित्वात् ङीष् ।) झर्झरवाद्यम् । इति शब्दरत्नावली ॥ (यथा, हरिवंशे । २३७ । २ ।
"गोमुखाडम्बराणाञ्च भेरीणां सुरजः सह ।
झर्झरीडिण्डिमानाञ्च व्यश्रूयन्त महास्वनाः ॥")

झर्झरीकः, पुं, (झर्झतीति । झर्झ + "फर्फरीकादयश्च ।" उणां । ४ । २० । इति ईकन् प्रत्ययेन निपातनात् साधुः ।) शरीरम् । इत्युणादिकोषः ॥ देशः । चित्रम् । इति संक्षिप्त-सारे उणादिवृत्तिः ॥

झलज्झला, स्त्री, (झलज्झल इत्यव्यक्तशब्दो-ऽस्त्यस्यामिति । अच् ।) हस्तिकर्णास्फालनम् । इति त्रिकाण्डशेषः ॥

झलरी, स्त्री, (झल्लरी । पृषोदरादित्वात् ललोपः ।) हुडुकः । झर्झरवाद्यम् । वालचक्रम् । केश-चक्रम् । इति मेदिनी । रे, १५९ ॥

झला, स्त्री, कन्या । आतपस्योर्म्मिः । इति मेदिनी । ले, २० ॥

झल्लः, पुं, वर्णसङ्करजातिविशेषः । इति जटाधरः ॥ स च क्षत्रियात् व्रात्यात् सवर्णायां जातः । (यथा, मनुः । १० । २२ ।
"झल्लो मल्लश्च राजन्यात् व्रात्यान्निच्छिविरेव च ॥")
प्रहासकः । इति महाभारतम् ॥ भाँड़ इति भाषा ॥ (स्त्री, झर्झरवाद्यम् ॥)

झल्लकं, क्ली, (झल्ल + स्वार्थे कन् ।) कांस्यनिर्म्मित-करतालकम् । यथा, तिथ्यादितत्त्वे ।
"शिवागारे झल्लकञ्च सूर्य्यागारे च शङ्खकम् ।
दुर्गागारे वंशिवाद्यं मधुरीञ्च न वादयेत् ॥"

झल्लकण्ठः, पुं, (झल्लो झल्लकशब्द इव कण्ठः कण्ठस्वरो यस्य ।) पारावतः । इति हारा-वली । ८७ ॥

झल्लरी, स्त्री, (झल्लं झल्लकशब्दं रातीति । रा + कः । स्त्रियां ङीष् ।) हुडुक्कः । झर्झर-वाद्यम् । (यथा, काशीखण्डे । २९ । ६८ ।
"झल्लरीवाद्यकुशला झलज्झालावलाहता ॥")
वालचक्रम् । वालझुँटि ख्यातम् । इति मेदिनी । रे, १५९ ॥ शुद्धम् । क्लेदः । इत्यजयपालः ॥

झल्लिका, स्त्री, (झल्लीव कायतीति । कै + कः । पृषोदरादित्वात् साधुः ।) उद्वर्त्तनपटः । द्योतः । इति मेदिनी । के, ८९ ॥ उद्वर्त्तनमलम् । इति शब्दरत्नावली ॥

झल्ली, स्त्री, (झल्ल + ङीष् ।) झर्झरवाद्यम् । इति शब्दरत्नावली ॥

झल्लोलः, पुं, (झर्झ क्विप् तादृशः सन् लोलः । ततः पृषोदरादित्वात् साधुः ।) तर्कुलावकः इति हारावली । २१३ ॥ ठेकुमार बाँटुल इति भाषा ॥

झष, वधे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) आद्यस्वरी । झषति । षष्ठस्वरी चाय-मिति केचित् । झूषति । इति दुर्गादासः ॥

झष, ञ ग्रहे । पिधाने । इति कविकल्पद्रुमः ॥ (भ्वां-उभं-सकं-सेट् ।) ञ, झषति झषते वस्त्रं जनो गृह्णाति परिदधाति वेत्यर्थः । अयम-स्वरादिरयमिति पूर्व्वचन्द्रविलोचनरामाः । आषति आषते । इति दुर्गादासः ॥

झषं, क्ली, (झष ग्रहे + अच् ।) विपिनम् । इत्यजय-पालः ॥

झषः, पुं, (झष्यते वध्यते भक्षणाय झषति गृह्णाति इति वा । झष + "खनो घ च ।" ३।३।१२५। इति घ ।) मत्स्यः । इत्यमरः । १ । १० । १ ॥ (यथा, भगवद्गीतायाम् । १० । ३१ ।
"झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥"
मकरः । यथा, रामायणे । २ । ११४ । ४ ।
"मीनमीनझषग्राहां कृष्णां गिरिनदीमिव ॥")
तापः । वनम् । इति मेदिनी । षे, १२ ॥ मीनराशिः । यथा,—
"साहसप्रभवे मेषे वसुसाहौ घटे झषे ॥"
इति समयप्रदीपः ॥

झषकेतनः, पुं, (झषो मकरो मीनो वा केतनं केतु-रस्य ।) कन्दर्पः । इति हलायुधः ॥

झषा, स्त्री, (झष् + अच् ततष्टाप् ।) नागबला । इत्यमरः । २ । ४ । ११७ ॥

झषाङ्कः, पुं, (झषः अङ्को यस्य ।) अनिरुद्धः । इति हेमचन्द्रः ॥ (कन्दर्पः । यथा, श्रीकण्ठ-चरिते । ११ । २ ।
"यत्कथा किल झषाङ्कपुलिन्द्र-
चन्द्रमानवद्विषप्रलसाधात् ॥")

झषाशनः, पुं, (झषान् मत्स्यान् अश्नातीति । अश् श भोजने + कर्त्तरि ल्युः ।) शिशुमारः । इति त्रिकाण्डशेषः ॥

झषोदरी, स्त्री, ( झषो मत्स्य एव उदरं उत्पत्तिस्थानमस्याः । झषस्य उदरं उत्पत्तिस्थानतयास्त्यस्याः इति अर्शआदिभ्योऽजिति केचित् । ) व्यासमाता । इति त्रिकाण्डशेषः ॥

झाकृतं, क्ली, ( झाम् इत्यव्यक्तशब्दस्य कृतं करणं यत्र ।) परुषालङ्कारविशेषः । इति भरतः ॥

झाटः, पुं, (झट + घञ् । ) निकुञ्जः । कान्तारः । व्रणादीनां मार्ज्जनम् । इति मेदिनी । टे, १६ ॥

झाटलः, पुं, (झाटं लातीति । ला + कः ।) घण्टापाटलिः । इत्यमरः । २ । ४ । ३६ ॥

झाटा, स्त्री, ( झट् + णिच् + अच् ततष्टाप् च ।) भूम्यामलकी । इत्यमरः ॥ यूथीवृक्षः । इति शब्दचन्द्रिका ॥

झाटिका, स्त्री, ( झाटा + स्वार्थे कन् । टापि अत इत्वञ्च । ) भूम्यामलकी । इति शब्दचन्द्रिका ॥

झामकं, क्ली, ( झम् + ण्वुल् । ) दग्धेष्टका । इति हारावली । २१४ ॥ झामा इति भाषा ॥

झामरः, पुं, ( झामं रातीति । रा + कः । ) तर्कुशाणः । इतिशब्दरत्नावली ॥ टेकुयार शाण इति भाषा ॥

झार्झरः, पुं स्त्री, ( झर्झरवादनं शिल्पमस्य । "मड्डुकझर्झरादन्यतरस्याम् ।" ४ । ४ । ५६ । इति अण् ।) झार्झरिकः । झर्झरवाद्यकर्त्ता । इति व्याकरणम् ॥

झालिः, स्त्री, व्यञ्जनविशेषः । झारि इति ख्याता । यथा, भावप्रकाशस्य पूर्ब्बखण्डे २ भागे ।
"आम्रमामफलं पिष्टं राजिकालवणान्वितम् ।
भृष्टं हिङ्गुयुतं पूतं घोलितं झालिरुच्यते ॥
झालिर्हरति जिह्वायाः कुण्ठत्वं कण्ठशोधिनी ।
मन्दं मन्दं निपीता वा रोचनी वह्निबोधिनी ॥"
(जारिः जालिः इति पाठोऽपि क्वचित् दृश्यते ॥)

झावुः, पुं, (झा इति कृत्वा वाति वायुरत्र । वा + डुः । ) वृक्षविशेषः । इति शब्दरत्नावली ॥ झाउ इति भाषा ॥

झावुकः, पुं, (झावुरेव । स्वार्थे कन् ।) वृक्षविशेषः । झाउ इति भाषा । तत्पर्य्यायः । पिचुलः २ झावुः ३ झावूः ४ । इति शब्दरत्नावली ॥

झिङ्गाकं, क्ली, ( लिगि + आकन् । पृषोदरात् साधुः । ) फलविशेषः । झिङ्गा इति भाषा । अस्य गुणाः । तिक्तत्वम् । मधुरत्वम् । आमवातमन्दाग्निकारित्वञ्च । इति राजवल्लभः ॥

झिङ्गिनी, स्त्री, (लिगि + णिनिः । पृषोदरात् साधुः । ङीप् च ।) जिङ्गिनीवृक्षः । इति भावप्रकाशः ॥ उल्का । इति शब्दरत्नावली ॥

झिङ्गी, स्त्री, ( लिगि + अच् ङीष् । पृषोदरात् साधुः । ) जिङ्गिनीवृक्षः । इति भावप्रकाशः ॥

झिञ्झिमः, पुं, ( झिम् इत्यव्यक्तशब्दं कृत्वा भ्रमति अग्नि इत्यादीन् दहतीत्यर्थः । ( भ्रम भ्रमे + अच् । पृषोदरादित्वात् साधुः । ) दावाग्निः । इति हारावली ॥ २६८ ॥

झिञ्झिरिष्टा, स्त्री, क्षुपविशेषः । झिञ्झिरीटा । इति भाषा । तत्पर्य्यायः । वला २ पीतपुष्पा ३ झिञ्झिरा ४ रोमाञ्चफला ५ दृढा ६ । अस्या गुणाः । कटुत्वम् । शीतत्वम् । कषायत्वम् । रक्तातिसारनाशित्वम् । रुच्यत्वम् । सन्तर्पणत्वम् । बल्यत्वम् । महिषीगौरवर्द्धनत्वञ्च । इति राजनिर्घण्टः ॥

झिञ्झी, स्त्री, ( झिञ्झा इत्यव्यक्तशब्दोऽस्त्यस्याः । अच् ततो ङीष् च । ) झिल्ली । यथा,—
"झिञ्झीवाचालमधुरा कूजन्ती मधुराकृतिः ॥"
इत्यागमः ॥

झिण्टी, स्त्री, (झिमिति कृत्वा अटतीति । अट् + अच् । ङीष् च पृषोदरात् साधुः । ) पुष्पवृक्षविशेषः । झाँटी इति भाषा । तत्पर्य्यायः । सैरीयकः २ इत्यमरः । २ । ४ । ७५ ॥ कण्टकुरण्टः ३ सैरेयकः ४ झिण्टिका ५ । इति राजनिर्घण्टः ॥ नीलझिण्ट्याः पर्य्यायः । बाणा १ दासी २ आर्त्तगलः ३ । इत्यमरः । २ । ४ । ७४ ॥ बाणः ४ आर्त्तगलः ५ इति तट्टीका ॥ सहचरः ६ नीलकुरण्टकः ७ । इति रत्नमाला ॥ रक्तझिण्ट्याः पर्य्यायः । कुरवकः १ । इत्यमरः ॥ पीतझिण्ट्याः पर्य्यायः । कुरण्टकः १ सहचरी २ । इत्यमरः ॥ सहचरः ३ सहाचरः ४ । इति तट्टीका ॥ पीतः ५ पीतपुष्पः ६ दासी ७ कुरण्डकः ८ । इति रत्नमाला ॥ अस्या गुणाः । कटुत्वम् । तिक्तत्वम् । दन्तामयशूलवातकफशोफकासत्वग्दोषनाशित्वञ्च । कुन्दरत्वम् । इति राजनिर्घण्टः ॥

झिरिका, स्त्री, ( झिरीति अव्यक्तशब्देन कायति शब्दायते इति । कै + कः टाप् च । ) झिल्ली । इति शब्दरत्नावली ॥

झिरी, स्त्री, ( झिर् इत्यव्यक्तशब्दो अस्त्यस्याः । अच् ङीष् ।) झिल्ली । इति शब्दरत्नावली ॥

झिल्लिः, स्त्री, ( झिर् इत्यव्यक्तशब्देन लिशतीति । लिश + डिः । रस्य लः । ) वाद्यविशेषः । यथा, गूढार्थदीपिकायाम् ।
"घण्टाशङ्खस्तथा भेरीमृदङ्गौ झिल्लिरेव च ।
पञ्चानां शस्यते वाद्यं देवताराधनेषु च ॥"

झिल्लिका, स्त्री, (झिर् इत्यव्यक्तशब्दं लिशतीति । लिश + डिः रस्य लत्वे साधुः । ततः स्वार्थे कन् ।) झिल्ली । (यथा, रामायणे । २।२६।११।
"झिल्लिकाविरुतैर्दीर्घैं रुदतीव समन्ततः ॥")
आतपस्य रुचिः । विलेपनमलम् । इति हेमचन्द्रः ॥ झिल्लिकारावः । उद्वर्त्तनवस्त्ररुचिः । इति शब्दरत्नावली ॥ (उद्वर्त्तनवस्त्रम् । झिण्टी । इति मेदिनी । के, ८६ ॥ )

झिल्ली, स्त्री, ( झिल्लि + कृदिकारादिति वा ङीष् ।) कीटविशेषः । झिँझिपोका इति भाषा । तत्पर्य्यायः । झिल्लीका २ झिल्लिका ३ झिरिका ४ झीरुका ५ झिरी ६ चीरिका ७ चील्लिका ८ चिल्ली ९ भृङ्गारी १० चीरुका ११ । इति शब्दरत्नावली ॥ चीरी १२ । इत्यमरः ।२।५। २८ ॥ चीरुका १३ । इति तट्टीका ॥ ( यथा, मालवती, ।६।१३।५।
"अहरहज्झिल्लीकणकर्णपूर-
जलकणवाग्भिर्व्यथितान्तरात्मा ॥")
आतपरुचिः । वर्त्तौ । उद्वर्त्तनांशुकम् । इति मेदिनी ॥ स्वातीकन्दरपात्रम् । इत्यजयपालः ॥

झिल्लीकण्ठः, पुं, ( झिल्लीवत् कण्ठः कण्ठशब्दोऽस्य ।) ग्रहकपोतः । इति त्रिकाण्डशेषः ॥

झिल्लीका, स्त्री, ( झिल्ली + संज्ञायां कन् ततष्टाप् । ) झिल्लिका । इति हेमचन्द्रः ॥

झीरुका, स्त्री, ( झिर् इति कृत्वाव्यक्तं रौतीति । रु + शब्दे बाहुलकात् कक् टाप् च ।) झिल्ली । इत्यमरः । २ । ५ । २८ ॥

झु, ङ गत्याम् । (भ्वा-आत्मं-सकं-अनिट् । ) जुङस्थाने झुङ इत्यपि केचित् । ङ, झवते । इति दुर्गादासः ॥

झुण्टः, पुं, (झट् संघाते + घञ् पृषोदरात् साधुः ।) स्तम्बः । अप्रकाण्डवृक्षः । इति शब्दचन्द्रिका ॥

झुमरिः, स्त्री, रागिणीविशेषः । यथा,—
"प्रायः शृङ्गारबहुला माध्वीकमधुरा मृदुः ।
एकैव झुमरिर्लोके वर्णादिनियमोज्झिता ॥
अतो लक्षणमेतस्या नोदाहारि विशेषकम् ।
इदं हि शाक्तं सर्व्वं प्रविष्टं रूपरञ्जनम् ॥"
इति सङ्गीतदामोदरः ॥

झूणिः, पुं, क्रमुकभेदः । स्त्री, वृद्धदेवस्तुतिः । इति मेदिनी । णे, १४ ॥

झॄ, ष य ज्याने । गतवयोभाव इति यावत् । (दिवां-परं-अकं-अनिट् ।) इति कविकल्पद्रुमः ॥ ष, झरा । य, झीर्य्यति । इति दुर्गादासः ॥

झोड़ः, पुं, गुवाकवृक्षः । इति भूरिप्रयोगः ॥

झ्यु, ङ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-सकं-अनिट् ॥)

---

## ञ

ञ, ञकारः । स व्यञ्जनदशमवर्णः चवर्गपञ्चमवर्णश्च । ( अस्य तु अर्द्धमात्राकालेनोच्चार्य्यः । ) अस्योच्चारणस्थानं तालु । इति व्याकरणम् ॥ * ॥ अस्योत्पत्तिर्यथा,—
"विसर्गस्तालुगः घोषा ञं चवर्गश्च यत्नतः ॥"
इति प्रपञ्चसारः ॥ * ॥
( पाणिनिमते तु अस्योत्पत्तिस्थानं नासिकान्वितताल । अस्योच्चारणे जिह्वामध्येन तालुमध्यस्य स्पर्शः आभ्यन्तरप्रयत्नः । संवारनादघोषा अल्पप्राणश्च बाह्यप्रयत्नाः । मातृकान्यासेऽस्य वामकराङ्गुल्यग्रे न्यासक्रिया स्यात् । वङ्गीयवर्णमालायां) अस्य लेखनप्रकारो यथा,
"कुण्डलीत्रयमास्थाय दक्षतो वामतस्ततः ।
ऋजुर्वामोगता मात्रा वामतः कुञ्चिता पुनः ॥
तिष्ठन्ति तासु नित्यासु ब्रह्मेशविष्णवः सदा ।
कुण्डलीत्रयरूपा तु या मात्रा मध्यतः स्थिता ॥
महाशक्तिस्वरूपा सा ध्यानमस्य प्रचक्षते ॥ * ॥
चतुर्भुजां धूम्रवर्णां कृष्णाम्बरविभूषिताम् ।
नानालङ्कारसंयुक्तां जटामुकुटमण्डिताम् ॥

ईषद्धास्यमुखीं नित्यां वरदां भक्तवत्सलाम् ।
एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत् ॥”
इति वर्णोद्धारतन्त्रम् ॥ * ॥

अस्य स्वरूपं यथा, कामधेनुतन्त्रे ।
“सदा ईश्वरसंयुक्तं ञकारं शृणु सुन्दरि ! ।
रक्तविद्युल्लताकारं ञ वर्णं परकुण्डली ॥
पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं सदा ।
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा ॥”
तस्य २२ द्वाविंशतिर्नामानि यथा,—
“ञकारो बोधनी विश्वा कुण्डली मत्सरो वियत् ।
कौमारी नागविज्ञानी सव्याङ्गुलनखो नरः ॥
धर्म्मैकपादिका बुद्धिः सर्व्वात्मा घर्घरध्वनिः ।
धर्म्मैकपादः सुमुखो विरजा चन्द्रमेश्वरी ॥
गायनः पुष्पधन्वा च रागात्मा च वराग्निणी ॥”
इति नानातन्त्रशास्त्रम् ॥

ञः, पुं, गायनः । घर्घरध्वनिः । इत्येकाक्षरकोषः ॥ बलीवर्द्दः । शुक्रः । वाममतिः । इति मेदिनी । ञे, १ ॥ ( गणपाठे धातोरुभयपदत्वविधायकोऽनुबन्धविशेषः । इति वोपदेवः ॥)

ञिः, पुं, प्रत्ययविशेषः । स प्रेरणार्थे भवति । तस्य इकारस्तिष्ठति । धातोरनुबन्धविशेषः । स वर्त्तमानक्तप्रत्ययबोधकः । इति वोपदेवस्वामी ॥

ञ्यन्तः, पुं, ( ञिः प्रत्ययविशेषोऽन्ते यस्य । ) ञिप्रत्ययान्तः । यथा, “ञिञ्यन्तपिवधे” इत्यादि आत्मनेपदप्रकरणीयसूत्रम् ॥ स च प्रत्ययः धातोः स्वार्थे च भवति । यथा, ञिः प्रेरणे इति ञेः स्थाने णिरिति च मुग्धबोधव्याकरणम् ॥ मुग्धबोधव्याकरणस्य परिच्छेदविशेषः । यथा, इति ञ्यन्तपादः ॥

---

## ट

ट, टकारः । स व्यञ्जनैकादशवर्णः । टवर्गप्रथमवर्णश्च । अस्योच्चारणस्थानं मूर्द्धा । इति व्याकरणम् ॥ (अस्योच्चारणे मूर्द्धस्थानेन जिह्वामध्यस्य स्पर्शः आभ्यन्तरप्रयत्नः । मातृकान्यासेऽस्य दक्षिणस्फिचि न्यास्यत्वम् । वङ्गीयवर्णमालायाम् ) तस्य लेखनप्रकारो यथा,—
“ऊर्द्धाधःक्रमतो रेखा कुण्डलीरूपतस्तथा ।
तिष्ठन्ति तासु नित्यासु कुबेरयमवायवः ॥
मात्रा कोणगता चोर्द्धा तत ऊर्द्धगता तु सा ।
सा नित्या परमा शक्तिश्चतुर्वर्गप्रदायिनी ॥
ध्यानमस्य प्रवक्ष्यामि शृणुष्व वरवर्णिनि ! ।
मालतीपुष्पवर्णाभां पूर्णचन्द्रनिभेक्षणाम् ॥
दशबाहुसमायुक्तां सर्व्वालङ्कारसंयुताम् ।
धर्म्ममोक्षप्रदां नित्यां सदा स्मेरमुखीं पराम् ॥
एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत् ॥”
इति वर्णोद्धारतन्त्रम् ॥ * ॥

अस्य स्वरूपं यथा,—
“टकारं चञ्चलापाङ्गि ! स्वयं परमकुण्डली ।
कोटिविद्युल्लताकारं पञ्चदेवमयं सदा ॥
पञ्चप्राणयुतं वर्णं गुणत्रयसमन्वितम् ।
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा ॥”
इति कामधेनुतन्त्रम् ॥

तस्य २७ सप्तविंशतिर्नामानि यथा,—
“टङ्कारः कपाली च सोमेशः खेचरी ध्वनिः ।
मुकुन्दो विनदा पृथ्वी वैष्णवी वारुणी नवः ॥
दक्षाङ्गार्द्धचन्द्रश्च जरा भूतिः पुनर्भवः ।
बृहस्पतिर्धनुश्चित्रा प्रमोदा विमला कटिः ॥
राणा गिरिर्महाधनुर्ग्रामात्मा सुमुखो मरुत् ॥”
इति नानातन्त्रशास्त्रम् ॥

टं, क्ली, ( टल् + डः । ) करङ्कः । इति विश्वः ॥

टः, पुं, (टल् + डः ।) वामनः । पादः । निस्वनः । इति मेदिनी । टे, १ ॥

टक, इ क बन्धे । इति कविकल्पद्रुमः ॥ ( चुरां-परं-सकं-सेट् । ) इ क, टङ्कयति । इति दुर्गादासः ॥

टक्कदेशीयः, पुं, ( टक्कदेशे भव इति छः । ) वास्तूकशाकः । इति त्रिकाण्डशेषः ॥

टगरः, पुं, ( टः टङ्कणः क्षारविशेषः गर इव । तीव्रगुणत्वात्तथात्वम् ।) टङ्कणक्षारः । हेलाविभ्रमगोचरः । केकराक्षे, त्रि । इति मेदिनी । रे, १६० ॥

टङ्कः, पुं, (टकि + घञ् ।) कोपः । कोषः । असिः । पाषाणदारणः । इति मेदिनी । के, २४ ॥ (यथा, अनर्घराघवे । १ । २२ ।
“यः कान्तदेहं परितस्य टङ्कै-
स्तपोमयैर्मांसमतक्षतुकार ॥”)
परिमाणविशेषः । स तु चतुर्म्माषकरूपचतुर्विंशतिरक्तिकारूपो वा । जङ्घा । इति हेमचन्द्रः । ३ । ५८३ ॥ दर्पः । इति हलायुधः ॥

टङ्कः, पुं क्ली, ( टकि + घञ् अच् वा । ) नीलकपित्थः । ( यथा, सुश्रुते सूत्रस्थाने ४६ ।
“शीतं कषायं मधुरं टङ्कं मारुतकृद्गुरु ॥”)
खनित्रम् । टङ्कणः । इति मेदिनी । के, २४ ॥ दर्पः । इति शब्दरत्नावली ॥

टङ्ककः, पुं, ( टङ्कति बध्नाति मनः स्नेहेनेति । टकि + ण्वुल् । यद्वा, टङ्क्यते बध्यतेऽनेन मन इति । घञ् । ततः संज्ञायां कन् ।) रजतमुद्रा । इति रूप्याध्यक्षशब्दे अमरटीकासारसुन्दरी भरतश्च ॥ टाका इति भाषा ॥

टङ्ककपतिः, पुं, (टङ्ककस्य पतिः रक्षकः ।) रूप्याध्यक्षः । टङ्ककशालानियुक्तः । इत्यमरटीकासारसुन्दरी ॥ टाकशालेर अध्यक्ष इति भाषा ॥

टङ्ककशाला, स्त्री, ( टङ्ककस्य शाला । ) रजतमुद्रागृहम् । इत्यमरटीकासारसुन्दरी ॥ टाकशाल इति भाषा ॥

टङ्कटीकः, पुं, शिवः । इति त्रिकाण्डशेषः ॥

टङ्कणः, पुं, ( टकि बन्धे + ल्युः । पृषोदरात् णत्वे साधुः ।) क्षारविशेषः । सोहागा इति भाषा । (यथा, सुश्रुते सूत्रस्थाने ४६ अध्याये ।
“विरूक्षणोऽग्निजननः श्लेष्मघ्नः पित्तदूषणः ।
अग्निदीप्तिकरस्तीक्ष्णष्टङ्कणः क्षार उच्यते ॥”)
तत्पर्य्यायः । पाचनकः २ मालतीतीरजः ३ लोहश्लेषणः ४ रसशोधनः ५ । इति हेमचन्द्रः । ४ । १० ॥ टङ्कणक्षारः ६ टङ्कक्षारः ७ रसाधिकः ८ लोहद्रावी ९ रङ्गदः १० सुभगः ११ रङ्गदः १२ वर्त्तुलम् १३ कनकम् १४ क्षारम् १५ मलिनम् १६ धातुवल्लभम् १७ । इति राजनिर्घण्टः ॥ मालतीतीरसम्भवः १८ द्रावी १९ द्रावकः २० लोहशुद्धिकारकः २१ । इति भावप्रकाशः ॥ स्वर्णपाचकः २२ । इति रत्नमाला ॥ अस्य गुणाः । कटुत्वम् । उष्णत्वम् । कफस्थावरादिविषकासश्वासनाशित्वञ्च । इति राजनिर्घण्टः ॥ अग्निवातपित्तकारित्वम् । रूक्षत्वम् । इति भावप्रकाशः ॥ ( देशविशेषः । यथा, बृहत्संहितायाम् । १४।१२ ।
“काश्मीरटङ्कणवनवासि शिबिकफणिकारकोङ्कणाभीराः ॥”)

टङ्का, स्त्री, ( टकि + अच् टाप् । ) जङ्घा । इति मेदिनी । के, २५ ॥

टङ्कानकः, पुं, (टङ्कं दर्पं कोपं वा आनयति उद्दीपयतीति । आङ् + नी + णिच् + ण्वुल् । ) श्यामदारुणः । इति शब्दचन्द्रिका ॥

टङ्कारः, पुं, (टल् वैक्लव्ये + बाहुलकात् कः । टं वैक्लव्यं चित्तस्य विकृतिं करोतीति । कृ + कर्म्मण्यण् । ) विस्मयः । प्रसिद्धः । शिञ्जितध्वनिः । इति मेदिनी । रे, १६० ॥ ( यथा, काशीखण्डे । २९ । ६९ ।
“टीकिताशेषपाताला टङ्कितेऽद्रिपाटके ।
टङ्कारनृत्यत्कल्लोला टीकनीया महातटा ॥”
क + घञ् । कारः टं इति अव्यक्तशब्दस्य कारः करणं यत्र । ध्वनिमात्रे । यथा, भागवते । ३ । १७ । ९ ।
“अन्तर्ग्रामेषु मुखतो वमन्तो वह्निमुल्बणम् ।
सृगालोलूकटङ्कारैः प्रणेदुरशिवाः शिवाः ॥”)

टङ्कारी, स्त्री, ( टङ्कं करोतीति । कृ + “कर्म्मण्यण् ।” ३ । २ । १ । इत्यण् । ततो गौरादित्वात् ङीष् । ) क्षुपविशेषः । टेकारी इति भाषा । अस्य गुणाः । वातश्लेष्मोदरव्यथानाशित्वम् । तिक्तत्वम् । दीपनत्वम् । लघुत्वञ्च । इति राजनिर्घण्टः ॥

टङ्गः, पुं क्ली, (टकि + अच् ।) खनित्रम् । खड्गभेदः । जङ्घा । इति मेदिनी । गे, ७ ॥

टङ्गणः, पुं, ( टङ्क + पृषोदरात् साधुः । ) टङ्कणः । इति शब्दचन्द्रिका ॥ सोहागा इति भाषा । चतुर्म्माषकपरिमाणम् । इति वैद्यकपरिभाषा ॥

टङ्गणः, पुं क्ली, ( टङ्कण + पृषोदरात् साधुः । ) टङ्कणः । सोहागा इति भाषा । अस्य गुणाः । श्लेष्मवायुनाशित्वम् । क्षाररसत्वम् । तीक्ष्णत्वम् । उष्णत्वम् । अग्निवर्द्धकत्वम् । विरूक्षणत्वम् । भेदकत्वम् । बलवर्द्धनत्वञ्च । इति राजवल्लभः ॥

टङ्किणी, स्त्री, ( टकि बन्धे + णिनिः । ततः पृषोदरात् णत्वे ङीपि च साधुः । ) द्रव्यविशेषः । इति शब्दचन्द्रिका ॥ आकनादि इति भाषा ॥

टङ्कणी, स्त्री, ( टङ् इत्यव्यक्तशब्दं नयतीति । नी+क्विप् । ) च्योटी । इति त्रिकाण्डशेषः ॥

टङ्करी, स्त्री, ( टङ्कमित्यव्यक्तशब्दं रातीति । रा+कस्ततो ङीष् । ) झम्पावादः । लम्पावाद्यम् । पटहवाद्यम् । इति मेदिनी । रे, १५६ ॥

टङ्कुरः, पुं, ( टङ्कु इत्यव्यक्तशब्दं रातीति । रा+कः । ) भेरीशब्दः । इति हेमचन्द्रः ॥

टल, ज विक्लवे । इति कविकल्पद्रुमः ॥ ( भ्वा-परं-अकं-सेट् । ) ज, टालः टलः । विक्लवो विक्लीभावः । इति दुर्गादासः ॥

टलनं, क्ली, ( टल+भावे ल्युट् ।) विक्लवः । टला इति भाषा ॥

टा, स्त्री, ( टलति प्रलये भूकम्पादौ वा । टल+ड टाप् च ।) पृथिवी । इत्येकाक्षरकोषः ॥

टाङ्करः, पुं, ( टङ्कस्येदं टाङ्कम् । टङ्क+अण् । टाङ्कं रातीति । रा+कः । ) नागवीटः । इति त्रिकाण्डशेषः ॥

टारः, पुं, ( टां पृथ्वीं ऋच्छतीति । ऋ+अण् । ) वाहः । तुरङ्गः । इति हेमचन्द्रः ॥

टिक, ऋ ङ गत्याम् । इति कविकल्पद्रुमः ॥ ( भ्वा-आत्मं-सकं सेट् । ) ऋ, अटिटेकत् । ङ, टेकते । इति दुर्गादासः ॥

टिटिभकः, पुं, ( टिटीत्यव्यक्तशब्दं भणति । भण+डः । ततः स्वार्थे कन् । ) टिट्टिभपक्षी । इत्यमरटीका ॥

टिट्टिभः, पुं, ( टिट्टीत्यव्यक्तशब्दं भणतीति । भण+डः । ) पक्षिविशेषः । टीटि इति भाषा । तत्पर्य्यायः । टीटिभकः २ । इति शब्दरत्नावली ॥ टिट्टिभकः ३ । इत्यमरः । २।५।३५ ॥ टिट्टिभकः ४ । इति तट्टीका ॥ ( यथा, मनुः । ५ । ११ ।

"अनिर्द्दिष्टांश्चैकशफांष्टिट्टिभञ्च विवर्ज्जयेत् ॥")

त्रयोदशमन्वन्तरीयेन्द्रशत्रुदानवविशेषः । यथा,

"इन्द्रो दिवस्पतिः शत्रुष्टिट्टिभो नाम दानवः ।
मायूरेण च रूपेण घातयिष्यति माधवः ॥"

इति गारुडे ८७ अध्यायः ॥

( वत्सासुरभारतचकदानवानामन्यतमः । अमी हि मर्त्त्यधर्म्मविवर्ज्जितः । यथा, महाभारते । २ । ६ । १९ ।

"टिट्टिभो विटभूतश्च संह्रादश्चेन्द्रतापनः ॥"

इत्युपक्रम्याह ।

"सर्व्वे लब्धवराः शूराः सर्व्वे विगतमृत्यवः ॥")

टिट्टिभकः, पुं, ( टिट्टिभ+स्वार्थे कन् । ) टिट्टिभपक्षी । इत्यमरः । २।५।३५ ॥ [प्रकाशः ॥

टिण्टिशिका, स्त्री, अम्लशिरीषिका । इति भाव-

टिण्डिशः, पुं, क्षुपविशेषः । डिण्डिशः । इति ढेँडशी इति च भाषा । तत्पर्य्यायः । रोमशफलः २ तिण्डिशः ३ मुनिनिर्म्मितः ४ । इति राजनिर्घण्टः ॥ डिण्डिशः ५ । अस्य गुणाः । रुचिकारित्वम् । भेदकत्वम् । पित्तश्लेष्माश्मरीनाशित्वम् । सुशीतलत्वम् । वातलत्वम् । रूक्षत्वम् । मूत्रलत्वञ्च । इति भावप्रकाशः ॥

टिप, ण क्षिपि । इति कविकल्पद्रुमः ॥ ( चुरा-परं-सकं-सेट् । ) ण, टेपयति । क्षिपि प्रेरणे । इति दुर्गादासः ।

टिप्पनी, स्त्री, ( टेपयति व्याख्यायतेऽनया । टिप+करणे ल्युट् ङीप् च । पृषोदरादित्वात् पस्य द्वित्वे साधुः । ) टीका । यथा,—

"श्रीमद्भागवतं मत्वा लीलायव्याः सुटिप्पनी ।
भवेदिन सुबोधार्थं क्रियते यद्गुरोः श्रुतम् ॥" )

टीक, ऋ ङ गत्याम् । इति कविकल्पद्रुमः । (भ्वा-आत्मं-सकं-सेट् ।) ऋ, अटिटीकत् । ङ, टीकते । इति दुर्गादासः ॥

टीका, स्त्री, ( टीक्यते गम्यते प्रविश्यते ज्ञायते वाऽनया । टीक+करणे कः । टाप् च ।) विवरणग्रन्थः । इति लिङ्गादिसंग्रहे अमरः ॥

टुण्टुकः, पुं, श्योनाकवृक्षः । इत्यमरः । २।४।५६ ॥ कृष्णखदिरवृक्षः । इति शब्दचन्द्रिका ॥ ( टुण्टु इत्यव्यक्तशब्देन कायति शब्दायते इति । कै+कः । ) पक्षिविशेषः । इति शब्दरत्नावली ॥ टुण्टुनि इति भाषा । श्योनाकप्रभेदः । इति राजनिर्घण्टः ॥

टुण्टुकः, त्रि, नीचः । इति मेदिनी ॥ क्रूरः । इति विश्वः ॥

टुण्टुका, स्त्री, टङ्गिणीवृक्षः । इति शब्दचन्द्रिका ॥

टुनाका, स्त्री, तालमूलीवृक्षः । इति शब्दचन्द्रिका ॥

टेरकः, त्रि, वक्रचक्षुः । टेरा इति भाषा । तत्पर्य्यायः । वलिरः २ केकरः ३ केदरः ४ । इति शब्दरत्नावली ॥

ट्वल, ज विक्लवे । इति कविकल्पद्रुमः ॥ ( भ्वा-परं-अकं-सेट् । ) वकारयुक्तः । ज, ट्वालः ट्वलः । विक्लवो विक्लीभावः । इति दुर्गादासः ॥

---

## ठ

ठ, ठकारः । स व्यञ्जनद्वादशवर्णः टवर्गद्वितीयवर्णश्च । (अर्द्धमात्राकालेनोच्चार्य्योऽयं वर्णः । ) अस्योच्चारणस्थानं मूर्द्धा । इति व्याकरणम् ॥ (अस्योच्चारणे जिह्वामध्येन मूर्द्धस्थानस्पर्शः आभ्यन्तरप्रयत्नः । विवारश्वासघोषा महाप्राणश्च वाह्यप्रयत्नाः । वङ्गवर्णमालायाम् ) तस्य लेखनप्रकारो यथा,—

"वामाङ्कुचन्द्राकारो रेखाधिष्ठितदेवताः ।
तिष्ठन्ति क्रमतो नित्यं चन्द्रसूर्य्याग्नयः प्रिये ! ॥
मात्रायाञ्चैव शक्तिस्तु ठकारः परमेश्वरि ! ॥
ध्यानमस्य प्रवक्ष्यामि शृणुष्व कमलानने ! ।
पूर्णचन्द्रप्रभां देवीं विकसत्पङ्कजेक्षणाम् ॥
सुन्दरीं षोडशभुजां धर्म्मकामार्थमोक्षदाम् ।
एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत् ॥"

इति तन्त्रोद्धारतन्त्रम् ॥ * ॥

अस्य स्वरूपं यथा, कामधेनुतन्त्रे ।

"ठकारं चञ्चलापाङ्गि ! कुण्डली मोक्षरूपिणी ।
पीतविद्युल्लताकारं सदा त्रिगुणसंयुतम् ॥
पञ्चदेवात्मकं वर्णं पञ्चप्राणमयं सदा ।
त्रिबिन्दुसहितं वर्णं त्रिशक्तिसहितं सदा ॥"

तस्य ३१ एकत्रिंशन्नामानि यथा,—

"ठः शून्यो मञ्जरी बीजः पाणिनी लाङ्गली क्षया ।
वनजो नन्दनो जिह्वा सुनन्दो वर्त्तुलः सुधा ॥
वर्त्तुलः कुण्डलो वह्निरमृतं चन्द्रमण्डलः ।
दक्षजानुश्च भावश्च देवभक्षो बृहद्ध्वनिः ॥
एकपादो विभूतिश्च ललाटं सर्व्वमित्रकः ।
वृषघ्नो नलिनी विष्णुर्महेशो ग्रामणीः शशी ॥"

इति नानातन्त्रशास्त्रम् ॥

ठः, पुं, शिवः । महाध्वनिः । चन्द्रमण्डलः । इत्येकाक्षरकोषः ॥ मण्डलः । शून्यम् । लोकगोचरः । इति मेदिनी । ठे, १ ॥

ठकुरः, पुं, देवता । ठाकुर इति ख्यातः । यथा,

"श्रीदामनामगोपालः श्रीमान् सुन्दरठकुरः ॥"

इत्यनन्तसंहिता ॥

ठठं } ठठठं } अ, अनुकरणशब्दः । ठन् ठन् इति भाषा । यथा, महानाटके । ९६ ।

"रामाभिषेके मदविह्वलायाः
कक्षाच्युतो हेमघटस्तरुण्याः ।
सोपानमासाद्य चकार शब्दं
ठठं ठठं ठं ठठठं ठठं ठः ॥"

ठरः, त्रि, वृद्धः । यथा, जा ठरं व इच्छन्ती । इति काव्यप्रकाशे देशीभाषा ॥

---

## ड

ड, डकारः । स व्यञ्जनत्रयोदशवर्णः टवर्गतृतीयवर्णश्च । अस्योच्चारणस्थानं मूर्द्धा । इति व्याकरणम् ॥ ( यथा, शिक्षायाम् । १७ ।

"स्युर्मूर्द्धन्या ऋटुरषा दन्त्या लृतुलसाः स्मृताः ॥")

वङ्गीयवर्णमालायामस्य लेखनप्रकारो यथा,

"ऊर्द्ध्वाधःक्रमतो रेखा मध्ये त्वाकुञ्चिता तथा ।
लक्ष्मीर्व्वाणी भवानी च क्रमशस्तत्र संस्थिता ॥
ब्रह्मरूपा तथा मात्रा महाशक्तिः प्रकीर्त्तिता ।
ध्यानमस्य प्रवक्ष्यामि शृणुष्वावहिता मम ।
नवासिन्दूरसङ्काशां वराभयकरां पराम् ॥
त्रिनेत्रां वरदां नित्यां परमोक्षप्रदायिनीम् ।
एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत् ॥"

इति वर्णोद्धारतन्त्रम् ॥ * ॥

अस्य स्वरूपं यथा, कामधेनुतन्त्रे ।

"डकारं चञ्चलापाङ्गि ! सदा त्रिगुणसंयुतम्
पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा ॥
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा ।
चतुर्ज्ञानमयं वर्णं आत्मादितत्त्वसंयुतम् ॥
पीतविद्युल्लताकारं डकारं प्रणमाम्यहम् ।"

तस्य २४ चतुर्व्विंशतिनामानि यथा,—

"डः स्मृतिर्दारुको नन्दरूपिणी योगिनी प्रियः ।
कौमारी शङ्करस्त्रासस्त्रिवक्रो नदको ध्वनिः ॥

"डिण्डिमो डौमरूपश्च सुनिगिन्मिल इत्यपि ।
डिण्डिमो वञ्चिलश्चैव पिनाकी चापधः स्मृतः ।
सुशीलो बालको श्यामो मन्थकश्चावमर्द्दकः ॥")

डित्थः, पुं, काष्ठमयहस्ती । यथा, सुपद्मव्याकरणे विभक्तिपादे ।
"डित्थः काष्ठमयो हस्ती यदित्थस्तन्मयो मृगः ॥"
विशेषलक्षणयुक्तपुरुषः । यथा,—
"श्यामरूपो युवा विद्वान् सुन्दरः प्रियदर्शनः ।
सर्व्वशास्त्रार्थवेत्ता च डित्थ इत्यभिधीयते ॥"
इति कलापटीकायां कविराजः ॥
(यदृच्छाशब्दविशेषश्चायमेवं । यथा, साहित्यदर्पणे । "यदृच्छाशब्दा एकव्यक्तिवाचिनो हरिहरडित्थडवित्थादयः ॥")

डिप, इ क ड ञ संहतौ । इति कविकल्पद्रुमः ॥ (चुरां-आत्मं-उभं च-सकं-सेट् ।) मूर्द्धन्यवर्गद्वतीयादिः । इ क ड, डिम्पयते । ञ, डिम्पयति डिम्पयते । अयमात्मनेपदीत्यन्ये । संहतौ राशीकरणम् । इति दुर्गादासः ॥

डिप, क ङ ञ संहतौ । इति कविकल्पद्रुमः ॥ (चुरां-आत्मं-उभं-च सकं-सेट् ।) मूर्द्धन्यवर्गद्वतीयादिः । क ङ, डेपयते । ञ, डेपयति डेपयते । पुनःपाठान्नित्यचुरादित्वम्बः । अयमात्मनेपदीत्यन्ये । संहतौ राशीकरणम् । इति दुर्गादासः ॥

डिप, शि क य इर् क्षुदि । इति कविकल्पद्रुमः ॥ (तुदां-चुरां-दिवां च-सकं-सेट् ।) शि, डिपति अडेपीत् । क, डेपयति । य, डिप्यति । इर् अडिपत् अडेपीत् । तुदाद्यन्तर्गणस्यैव कुटादित्वमिति दिवादिमध्ये गुणः । दिवादिमध्ये पुषादित्वाभिधं ङ इत्यन्ये । क्षुदि प्रेरणे । इति दुर्गादासः ॥

डिब, इ क क्षेपे । इति कविकल्पद्रुमः ॥ (चुरां-परं-सकं-सेट् ।) मूर्द्धन्यवर्गतृतीयादिः । इ क, डिम्बयति । क्षेपः प्रेरणम् । इति दुर्गादासः ॥

डिम, इ क ञ सङ्के । इति कविकल्पद्रुमः ॥ (चुरां-उभं-सकं-सेट् ।) इ क ञ, डिम्भयति डिम्भयते । अयमात्मनेपदीति केचित् । सङ्को राशीकरणम् । इति दुर्गादासः ॥

डिम, हिंसे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) डिडिम्भ । सौत्रधातुरयम् । इति दुर्गादासः ॥

डिमः, पुं, नाटकस्य रूपकविशेषः । इति हेमचन्द्रः । २ । १९८ ॥ (तल्लक्षणादिकं यदुक्तं साहित्यदर्पणे । ६ । २४६ ।
"मायेन्द्रजालसंग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ।
उपरागैश्च भूयिष्ठो डिमः ख्यातोऽतिवृत्तकः ॥
अङ्गी रौद्ररसस्तत्र सर्व्वेऽङ्गानि रसाः पुनः ।
चत्वारोऽङ्का मता नेह विष्कम्भकप्रवेशकौ ॥
नायका देवगन्धर्व्वयक्षरक्षोमहोरगाः ।
भूतप्रेतपिशाचाद्याः षोड़शात्यन्तमुद्धताः ।
वृत्तयः कौशिकीहीना निर्व्विमर्षाश्च सन्धयः ।
दीप्ताः स्युः षड़्रसाः शान्तहास्यशृङ्गारवर्जिताः ॥")

डिम्बं, क्ली, (डिम्ब+अच् ।) भयम् । आतङ्कम् । फुप्फुसः । इति हारावली । २३३ ॥ अमरः । इत्यमरः । ३ । २ । १४ ॥

डिम्बः, पुं, (डिबि क्षेपे+भावे घञ् ।) भयध्वनिः । अण्डम् । फुप्फुसः । प्लीहा । विप्लवः । इति मेदिनी । बे, ५ ॥ डिम्भः । इति त्रिकाण्डशेषः ॥

डिम्बाहवः, पुं, (डिम्बः नृपतिहीनत्वात् विप्लवमूलः आहवः ।) नृपतिरहितयुद्धम् । इति जटाधरः ॥ (यथा, मनुः । ५ । ९५ ।
"डिम्बाहवहतानाञ्च विद्युता पार्थिवेन च ॥"
"डिम्बाहवो नृपरहितयुद्धं तत्र हतानाम् ।"
इति तट्टीकायां कुल्लूकभट्टः ॥)

डिम्बिका, स्त्री, (डिम्बयति नायकसमीपे नोदयत्वात्मानमिति । डिम्ब+ण्वुल् । टाप् अत इत्वञ्च ।) कामुकी । जलविम्बः । शोणकवृक्षः । इति शब्दरत्नावली ।

डिम्भः, त्रि, (डिम्भयति संहतौ भवतीति । डिम्भ+पचाद्यच् ।) शिशुः । इत्यमरः । २ । ५ । ३८ ॥ (यथा, रसिकरञ्जने । १ ।
"शुभारम्भोऽदम्भे मत्ति हतमतिडिम्भोज्झितशठं ।
मतिस्तम्भे रम्भोदयसकुम्भकुम्भे परिचयम् ॥")
मूर्खः । इति मेदिनी । भे, ४ ॥ अस्य रूपान्तरं डिम्बः । इति त्रिकाण्डशेषः ॥

डिम्भकः, त्रि, (डिम्भ एव । डिम्भ+स्वार्थे कन् ।) बालकः । इति शब्दरत्नावली ॥ (स्वनामख्यातः शाल्वदेशाधिपतेर्ब्रह्मदत्तस्य पुत्रः । यथा, हरिवंशे भविष्यपर्व्वणि । ३२ । १८ ।
"हंसो ज्येष्ठो नृपसुतो डिम्भकोऽनन्तरोऽभवत् ॥"
अस्य विशेषविवरणं तत्रैव विस्तरशो द्रष्टव्यम् ॥)

डिम्भचक्रं, क्ली, (डिम्भ इव चक्रम् ।) नराणां शुभाशुभनिर्णायकचक्रविशेषः । यथा,—
"डिम्भचक्रे न्यसेद्भानि भानुभादित्रिमस्तके ।
मुखे त्रीणि द्वयं स्कन्धे चैकैकं बाहुहस्तयोः ॥
हृदि पञ्च नाभिगुह्ये चैकैकं षट् च जानुनोः ।
चरणाभ्यां तथैकैकं जन्मर्क्षपतनात् फलम् ॥
शीर्षस्थे कृषिलाभः स्यात् वक्त्रे मिष्टान्नभोजनम् ।
स्कन्धे धनी च बाहुभ्यां स्थानभ्रष्टो भवेन्नरः ॥
पाणिभ्यां तस्करो लक्ष्मीर्हृद्यायुश्च नाभितः ।
गुह्ये कामी भ्रमी जान्वोरल्पजीवी च पादयोः ॥"
इति स्वरोदयः ॥

डिम्भा, स्त्री, (डिम्भ+टाप् ।) अतिशिशुः । इत्यमरः । २ । ६ । ४१ ॥

डी, ओ ङ य गतौ । नभोगतौ । इति कविकल्पद्रुमः ॥ (दिवां-आत्मं-सकं अकं च-सेट् ।) ओ, डीनः । ङ य, डीयते । इति दुर्गादासः ॥

डी, ङ नभोगतौ । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-अकं-सेट् ।) ङ, डयते पक्षी । अत्रापि निष्ठायां डीनः । इति कातन्त्राः । धातुपारायणिकास्तु डयतिवत् ओदनुबन्धलोपो यङ्वादन्यादिविकल्पाद्भ्रुवि कथित इत्याहुः । गोयीचन्द्रोऽपि । डयितः डयितवान् इत्युदाहरणं । आमनि तु डीन इत्येव । इति दुर्गादासः ॥

डीनं, क्ली, (डी नभोगतौ+भावे क्तः ।) पक्षिगतिः । इति जटाधरः ॥ तद्भेदा यथा,—
"अथातः संप्रवक्ष्यामि पक्षिणां गतिमुत्तमाम् ।
ऊर्द्ध्वाधोगतिसम्बन्धः खसुरीर्थं प्रयत्नतः ॥
संकल्प्य पञ्चगमनसुष्वयति वातिरिक्तकम् ।
षड़्विंशतिरमी भेदाः पातानामिह दर्शिताः ॥
महाडीनं तिरश्चीनं नातानां त्रिविधा गतिः ।
गतं तत्र यथोद्दिष्टं आगतं पुनरागमः ॥
प्रत्याहृतिः प्रतिगतिरिति बहुसञ्ज्ञिः स्मृताः ।
तेषां निपाताः कथ्यन्ते प्रत्येकं पञ्चविंशतिः ॥"
तद्यथा । उड्डीनं ऊर्द्ध्वगमनम् १ अवडीनं अधःपतनम् २ प्रडीनं पतनवेगवत्ता ३ डीनं पतनमात्रम् ४ विडीनं नीचैःपतनम् ५ संडीनं सम्यक्पतनम् ६ तिर्य्यग्डीनं तिर्य्यक्पतनम् ७ विडीनं विचित्रं पतनम् ८ परिडीनं सर्व्वतः पतनम् ९ महाडीनं महाहरणं गमनम् १० सुडीनं सुकुमारपातः ११ अभिडीनं आभिमुख्येन पुनः पुनः पतनम् १२ महाडीनं सुखपतनेन प्रत्याहृतिः १३ निडीनं भक्ष्यमांसं वा पश्चात् पतनम् १४ अतिडीनं दीर्घपतनम् १५ अवडीनं अधःपतनम् १६ प्रडीनं अधःपतने वेगवत्ता १७ अवसंडीनं अधःपतने शोभनवत्ता १८ डीनडीनकं पतनं निर्व्विशेषं कुत्सितञ्च १९ संडीनोड्डीनं शोभनमूर्द्ध्वगमनम् २० संडीनडीनं शोभनगमनमात्रम् २१ पुनर्डीनं तदेव वामावर्त्तगमनम् २२ डीनावडीनकं तद्देवाथः कुत्सितञ्च २३ सम्पातं बहुभिः सह गमनम् २४ समुदीषं परस्परस्पर्द्धया गमनम् २५ ततोऽन्यत् व्यतिरिक्तकं तस्मात् उद्दीनतादेर्व्यतिरिक्तं पतनम् २६ । एतेषु षड़्विंशतिसंख्येषु पतनं एकं डीननामकं निर्व्विशेषणं पतनमात्रं सविशेषणानि पतनानि पञ्चविंशतिसंख्यानि तत्र तानि सविशेषणानि पञ्चमात्रपतुभिर्व्विशेषणैर्व्विशिष्टानि इति शतं निर्व्विशेषणैकमिति एकोत्तरं शतम् । तानि चत्वारि विशेषणानि यथा । गतं गमनमात्रम् । आगतं आगमनम् । प्रतिगतं गत्वैव पुनरागमनं आगत्यैव पुनर्गमनञ्च । इति महाभारते । ८ । ४१ अः ॥ * ॥
आगमशास्त्रविशेषः । यथा, मुण्डमालातन्त्रे ।
"डामरं डमरं डीनं भूतं कालीविलासकम् ।
सप्तकोटिमहातन्त्रा मम वक्त्राद्विनिर्गताः ॥"

डीनडीनकं, क्ली, (डी+भावे क्तः । ततः स्वार्थे कन् । डीनेन सह डीनकं निर्व्विशेषं कुत्सितं वा पतनम् ।) पक्षिणां गतिक्रियाविशेषः । इति जटाधरः । अस्य विवरणं डीनशब्दे द्रष्टव्यम् ॥

डीनावडीनं, क्ली, (डीनेन सह अवडीनम् ।) पक्षिगतिविशेषः । तत्तु एकस्यां गतौ गत्यन्तरमिश्रणम् । अधःकुत्सितगमनञ्च । इति महाभारते कर्णपर्व्वटीका ॥

डुण्डुः, पुं, (डुमिति शब्दं करोति शब्दयतीति। कै+ डुः।) डुण्डुभसर्पः। इति त्रिकाण्डशेषः॥

डुण्डुभः, पुं, (डुण्डु इत्यव्यक्तशब्देन भातीति। डुण्डु इत्यव्यक्तशब्देन भाति वा। भा+कः।) सर्पविशेषः। ढोँड़ा इति भाषा। तत्पर्य्यायः। राजिलः २ इत्यमरः॥१।८।५॥ डुण्डुभः ३। इति भरतः॥ जलव्यालः ४ डुण्डुः ५। इति त्रिकाण्डशेषः॥ (यथा, देवीभागवते।२।११।८८।
"एकदा स वने घोरं डुण्डुभं जरठान्वितम्।
अपश्यद्दक्षसुतस्य कन्तुं तं समुपाययुः॥")

डुण्डुलः, पुं, (डुण्डुरिति शब्दं लातीति। ला+कः।) क्षुद्रपेचकः। तत्पर्य्यायः। क्षुद्रोलूकः २ शाकुनेयः ३ पिङ्गलः ४ क्षपाचारी ५ इष्टचारी ६ विग्राहायः ७ सयङ्करः ८। इति राजनिर्घण्टः॥

डुलिः, स्त्री, (डुलि+पृषोदरादित्वात् साधुः।) दुलिः। कमठी। इत्यमरटीकायां रायमुकुटः॥

डुलिका, स्त्री, (डुलिरिव कायतीति। कै+कः। ततष्टाप्।) खञ्जनाकारपक्षिविशेषः। इति जटाधरः॥

डुली, स्त्री, (डुलि:+ङीष् वा।) चिल्लीशाकः। इति राजनिर्घण्टः॥

डोडी, स्त्री, क्षुपविशेषः। तत्पर्य्यायः। जीवन्ती २ शाकश्रेष्ठा ३ सुखालुका ४ मधुस्रवा ५ दीर्घपत्रा ६ कथ्यपत्रा ७ जीवनी ८। अस्या गुणाः। कटुत्वम्। तिक्तत्वम्। उष्णत्वम्। दीपनत्वम्। कफवातकण्ठामयरक्तपित्तार्त्ति-दाहनाशित्वम्। रुच्यत्वञ्च। इति राजनिर्घण्टः॥

डोमः, पुं, स्वनामख्यातान्त्यजजातिः। यथा,—
"चाण्डालश्चैव डोमश्च ब्राह्मणश्च तथा रति।
रजकीरश्चैव मलौरो भुजङ्गश्च तथाष्टमी॥
तथान्तजी लिङ्गधारी समा एते वरानने!।
स्पृष्ट्वा प्रमादतः स्नात्वा गायत्र्यष्टशतं जपेत्॥"
इति मत्स्यसूक्तमहातन्त्रे ३६ पटलः॥

डोरं, क्ली, हस्तादिबन्धनसूत्रम्। यथा,—
"कोऽनन्त इत्युदीर्य्याय श्रुत्वा तत्करपल्लवम्।
कृष्णादाकृष्य तद्दोरं चिक्षेपवान् पावकोपरि॥"
इति भविष्यपुराणे अनन्तव्रतकथा॥

डोरकं, क्ली, (डोर+स्वार्थे कन्।) डोरम्। यथा,
"चतुर्द्दशग्रन्थियुक्तं कुङ्कुमाक्तं सुडोरकम्।
स्त्रियश्च पुरुषश्चैव बध्नीयात् वामदक्षिणे॥"
इति भविष्यपुराणे अनन्तव्रतकथा॥

डोरली, स्त्री, (डोरमिव लयते इति। ली+क्विप्।) इक्षुली। इति राजनिर्घण्टः॥

---

# ढ

ढ, ढकारः। स व्यञ्जनचतुर्द्दशवर्णः। टवर्गचतुर्थ-वर्णश्च। (अर्द्धमात्राकालेनोच्चारणीयः।) अस्यो-च्चारणस्थानं मूर्द्धा। इति व्याकरणम्॥ (पाणि-नीयादिषु अस्योच्चारणे जिह्वामध्यभागेन मूर्द्धः स्पर्शः आभ्यन्तरप्रयत्नः। संवारनादघोषा महा-प्राणश्च बाह्यप्रयत्नाः। मातृकान्यासेऽस्य दक्ष-पादाङ्गुलीमूले न्यासविधिः। वर्णोद्धारतन्त्रोक्ता-याम्।) तस्य वेखनप्रकारो यथा,—
"अर्द्धोर्द्धःक्रमतो रेखा वामदक्षिणतो गता।
ततः सा कुण्डलीरूपा विष्णुब्रह्मस्वरूपिणी॥
महाशक्तिमयी मात्रा वामभङ्गप्रवर्त्तिनी।
रक्तोत्पलनिभां रम्यां रक्तपङ्कजलोचनाम्॥
अष्टादशभुजां भीमां महामोक्षप्रदायिनीम्।
एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत्॥"
इति वर्णोद्धारतन्त्रम्॥ *॥
अस्य स्वरूपं यथा, कामधेनुतन्त्रे।
"ढकारं परमाराध्यं या स्वयं कुण्डली परा।
पञ्चदेवात्मकं वर्णं पञ्चप्राणमयं सदा॥
सदा त्रिगुणसंयुक्तं आत्मादितत्त्वसंयुतम्।
रक्तविद्युल्लताकारं ढकारं प्रणमाम्यहम्॥"
तस्य २६ षड्विंशतिनामानि यथा,—
"ढो ढक्का निर्णयः पूर्णो यक्षेशश्चार्द्धनारीश्वरः।
अर्द्धनारीश्वरश्चोग्रमीश्वरौ त्रिशिखी नवः॥
इक्षुमादाङ्गुलेर्मूलं विद्विरक्ता विनायकः।
प्रहासा विधिरा स्नाह्निर्गुणी निधनो ध्वनिः॥
त्रिरेखः पालिनी स्वशधारिणी क्रोडपुच्छकः।
एकापुरं जगाक्षा च त्रिपाखा श्रीमनोरतिः॥"
इति नानातन्त्रशास्त्रम्॥

ढः, पुं, (ढौकते उच्चैःशब्देन आह्वयोति श्रवणे-न्द्रियमिति। ढौक गत्यावरणयोः+डः।) ढक्का। (यथा, तन्त्रे।
"ढो ढक्का निर्णयः पूर्णो यक्षेशश्चार्द्धनारीश्वरः॥")
श्वा। श्वलाङ्गूलम्। इति मेदिनी। ढे, १॥ निर्गुणः। ध्वनिः। इत्येकाक्षरकोषः॥

ढक्कः, पुं, देशविशेषः। इति भूरिप्रयोगः॥ ढाका इति भाषा॥

ढक्का, स्त्री, (ढक् इति गभीरशब्देन कायतीति। कै+कः टाप् च।) वाद्यविशेषः। ढाक इति भाषा। तत्पर्य्यायः। यशःपटहः २। इत्यमरः।१।७।६॥ विजयमर्द्दलः ३। इति शब्दरत्नावली॥ (यथा, आर्य्यासप्तशत्याम्।२४७।
"ढक्कामाकर्ण्य मदं विलम्बते करिण इव पिरं पुरुषाः॥")

ढक्कारी, स्त्री, (ढक्कां जयढक्कावत् गभीरसिंहनादं ऋच्छति समराङ्गणे इति। ऋ+अण् ङीप् च।) तारिणी। यथा,—
"ढक्कारवा च ढक्कारी ढक्कारवरवा ढका॥"
इति कुब्जिकातन्त्रे ताराशतसहस्रनामस्तोत्रम्॥

ढट्टी, स्त्री, वाद्यविशेषः। यथा, तन्त्रयामले अन्नपूर्णासहस्रनाम कथने।
"ढट्टीवाद्यस्वरूपा च ढकारावरूपिणी॥"

ढार्लं, क्ली, (ढौकते आवृणोति शरीरं अनेन। ढौक+अच्। पृषोदरात् आले अले च साधुः।) फलकम्। ढालिपत्रजयकरीति अन्नदाकल्पीय-सहस्रनामविवरणात्॥

ढाली [न्] त्रि, (ढालमस्त्यस्येति। इनिः।) ढाल-विशिष्टः। चर्म्मी। यथा,—
"ढालिपत्रजयकरी ढकारवर्णरूपिणी॥"
इति तन्त्रयामले अन्नपूर्णासहस्रनामस्तोत्रम्॥

ढामरा, स्त्री, हंसी। इति शब्दकल्पः॥

ढुण्ढ, अन्वेषणे। इति कविकल्पद्रुमः॥ (भ्वा-परं-सकं-सेट्।) ढाकस्तो दन्त्योपधः। ढ-कारोपधश्च। तेन धातोः यङादौ ढुण्ढन इत्यादि। ढुण्ढति धर्म्मं लोकः। इति दुर्गादासः॥

ढुण्ढिः, पुं, (ढुण्ढ्यतेऽसौ भक्तैरिति। ढुण्ढ अन्वे-षणे+इन्।) गणेशः। तन्नामकारणं यथा,— काशीखण्डे शिववाक्यम्।
"अन्वेषणे ढुण्ढिरयं प्रथितोऽस्ति धातुः
सर्व्वार्थढुण्ढिततया तव ढुण्ढिनाम।
काशीप्रवेशमपि को लभतेऽत्र देही
तोषं विना तव विनायक! ढुण्ढिराज!॥"
तन्माहात्म्यं यथा,—
"ढुण्ढे! प्रणम्य पुरतस्तव पादपद्मं
यो मां नमस्यति पुमानिह काशिवासी।
तत्कर्णमूलमधिगम्य पुरादिशामि
तत्किञ्चिदत्र न पुनर्भवतास्ति येन॥"
"यः प्रत्यहं नमति ढुण्ढिविनायक! त्वां
काश्यां प्रगे प्रतिहताखिलविघ्नसङ्घः।
नो तस्य जातु जगतीतलवर्त्ति वस्तु
दुष्प्रापमत्र परत्र च किञ्च नापि॥"
"प्रथमं ढुण्ढिराजोऽपि मम दक्षिणतो मनाक्।
आढुण्ढ्य सर्व्वभक्तेभ्यः सर्व्वार्थान् संप्रयच्छति॥"
तस्य यात्राविधानं यथा,—
"माघशुक्लचतुर्थ्यान्तु नक्तं व्रतपरायणाः।
ये त्वां ढुण्ढेऽर्च्चयिष्यन्ति तेऽर्च्याः सुरासुराद्धि-कानाम्॥
विधाय वार्षिकीं यात्रां चतुर्थीं प्राप्य तापसीम्।
शुक्लां शुक्लतिलैर्लड्डुकान् प्राश्नीयात् कङ्कुकान् व्रती॥
काश्यां यात्रा प्रयत्नेन चेत्सिद्धिमभीप्सुभिः।
तस्यां चतुर्थ्यां त्वत्प्रीत्यै ढुण्ढे! सर्व्वोपचर्य्यतु॥
तां यात्रां यत्र यः कुर्य्यान्निवेद्य तिलकङ्कु-कान्।
उपसर्गसहस्रेषु स हन्यते! ममाज्ञया॥
होमं तिलाज्यद्रव्येण यः करिष्यति भक्तितः।
तस्यां चतुर्थ्यां मन्त्रज्ञस्तस्य मन्त्रः प्रसेत्स्यति॥"
इति काशीखण्डे। ५० अध्याये॥

ढोलः, पुं, (ढः ढक्का तदाकारं लातीति। ला+कः। पृषोदरात् ओत्वे साधुः। ढुल उत्क्षेपे घञ्। पृषोदरात् साधु र्वा।) स्वनामख्यातवाद्यम्। यथा,—
"ढक्काढोलप्रिया नित्या ढोलवाद्यप्रमोदिनी।
ढोलरूपा ढोलधरा ढोलशब्दस्वरूपिणी॥"
इति तन्त्रयामले अन्नपूर्णासहस्रनामस्तोत्रम्॥

ढौक, ऋ ङ गत्याम्। इति कविकल्पद्रुमः॥ (भ्वा-आत्मं-सकं-सेट्।) चतुर्द्दशस्वरी। ऋ, अडु-ढौकत्। ङ, ढौकते। इति दुर्गादासः॥ (आहृतौ। "वदनं ढौकते। इति काशिकायाः॥)

---

भूमिरञ्जनसङ्काशा धारा चास्य सिता भवेत् ।
अञ्जनाख्यमिदं प्रायः सर्व्वदोषघ्नमुच्यते ॥"
लौहप्रदीपेऽपि ।
"धारा शुक्ला भवेद्यस्य भूमिः कज्जलसन्निभा ।
छायारङ्कैश्चितं वापि विद्यात् कज्जलघनकम् ॥२७॥
मधुवर्णसमा भूमिरङ्गं वा मधुबिन्दुवत् ।
माक्षिकाख्यमिति जानीयात् जयलक्ष्मीयशःप्रदम् ॥"
शार्ङ्गधरेऽपि ।
"निम्नकायो भवेद्यस्य राजिभिर्विविधैर्युतः ।
मधुरो मधुवर्णाभः स खड्गो देववल्लभः ॥
पिपीलिकाश्च दृश्यन्ते सततं मक्षिकादयः ॥२८॥
काकोलकोकिला यस्य क्षुद्राङ्गं कुलशीलनम् ॥
क्षुद्रकाख्यमिदं प्राह नागार्जुनो मुनिः ।
इदं कुलधनञ्च प्राह लौहार्णवे मुनिः ॥
अस्य चाग्निर्बलवान् दाहः समवलोकितः ॥२९॥
यदङ्गं मक्षिकाकारं भूमिश्चैव सितासिता ॥
क्लेदः शुष्यति चैवास्य मक्षिकाङ्कं समादिशेत् ॥३०॥
अङ्गं यदा तुषाकारं या च भूमिः सितासिता ॥
तुषकमिदं ख्यातं प्राह नागार्जुनो मुनिः ॥३१॥
अङ्गं यवफलाकारं भूमिः कृष्णा सिता तथा ॥
यवाङ्गमिति तं विद्यात्तत्स्पर्शे कण्डूसम्भवः ।
एष खड्गाधमः ख्यातो यदीच्छेद्भूतिमात्मनः ॥३२॥
अङ्गं ब्रीहिप्रसूनाभं भूमिर्धूम्रा सतोऽसितम् ।
तद्ब्रीहिवक्त्रं जानीयात्कृत्स्नं भयवर्द्धनम् ३३ ॥
जलनीलकसङ्काशमङ्गं भूमिः सितासिता ।
जलनीलकमाकुर्व्वं तनुते शिरसो रुजा ३४ ॥
यदा सर्षपबीजाभमङ्गं भूमिः सितासिता ।
खरधारः खरस्पर्शः सर्षपाङ्कः स दुर्लभः ॥३५॥
सिंहाकारं भवेद्यस्य अङ्गं भूमिः सितासिता ।
सिंहीवक्त्रं तद्विद्यात्तनुते प्रजपेश्वरः ॥
एतत्क्षालनतोयेन कायरोगोपशामनम् ॥३६॥
अङ्गं तण्डुलसङ्काशं भूमिर्धूम्रा सितासिता ।
तण्डुलाङ्गमिमं विद्याद्यशःश्रीबलवर्द्धनम् ।
एतत्पर्युषितं तोयं तण्डुलोदकसन्निभम् ॥
अस्य प्रभावान्मनुजो अर्थान् हि लभते श्रियम् ॥३७
अङ्गं चैवोत्सराकारं भूमिराघातनिःस्वना ॥
खड्गाधममिदं विद्यान्नीवर्जं नाम नामतः ॥३८॥
रेखा दीर्घाः शिराः कृष्णा भूमिश्चैव सिता-
सिता ॥
शिराङ्गमिति तं ब्रूयादेनं खड्गाधमं बुधाः ॥३९॥
शिवलिङ्गाकृतिश्चाङ्गे धारा चैव सिताथवा ॥
शिवाङ्गमिति तं ब्रूयाच्छत्रुपक्षनिसूदनम् ॥४०॥
यदा श्वाननखाकारमङ्गं भूमिस्तु पिङ्गला ॥
नखवक्त्रमिदं ब्रूयात्तत्स्पृशेत् श्वयथुर्भवेत्,
एतद्दामिषसंस्पर्शात् प्रविष्टेन क्षयमेव हि ॥४१॥
व्याघ्रपुच्छोपममङ्गं भूमिर्धूम्रा खराकृतिः ।
व्याघ्राङ्गमिति जानीयाच्छत्रुवंशोपनाशनम् ।
अस्य स्पर्शनमात्रेण जीवन्नश्यत्यवश्यकम् ॥४२॥
यदा मनुजनेत्राभमङ्गं भूमिः सितासिता ॥
नेत्राङ्गमिति जानीयात् संग्रामे विजयप्रदम् ।
एतत्क्षालनतोयेन नूनमन्धोऽपि पश्यति ॥४३॥
अङ्गं कीटसमं यस्य भूमिर्धूम्रा सितासिता ।
कीटाङ्गमिति जानीयात् कीटकुःखभयापहम् ॥४४॥
निरङ्गं स्थूलपक्वलितुषलाङ्गं विदुर्बुधाः ।
एतद्धि प्रायशो लोके दृश्यते हितवत्सम ॥"४५
पद्मपुराणस्य ।
"निरङ्गा निशिता धारा घाते वह्निं वमत्यपि ।
नीलीवक्त्रमिदं ज्ञेयं पृथिव्यां नातिदुर्लभम् ॥४६॥
अङ्गं काकपदाकारं भूमिराघातनिःस्वना ।
एष खड्गाधमः ख्यातो काकाङ्गो भूति-
मिच्छता ॥४७॥
यदा कपालमङ्गेषु दृश्यते घर्षितः स्वरम् ।
एतद्धि दुःखजनकं कपालाङ्गं विवर्जयेत् ॥४८॥
तन्वीपत्रा बलाङ्गा या सुवर्णाङ्गासिपुत्रिका ।
पत्रवक्त्रमाकुर्व्वं आयुर्वेदविदो जनाः ॥"
लौहार्णवेऽपि ।
"सुवर्णसन्निभा भूमिरङ्गं कालं प्रतीयते ।
तत् पत्रवक्त्रं काकस्य सुवर्णसुपजायते ॥४९॥
तुवरीदलसङ्काशमङ्गं यस्मिन् प्रतीयते ।
तुवरीवक्त्रमाकुर्व्वं तनुते शिरसो भ्रमः ॥
एष खड्गाधमः ख्यातो यदीच्छेज्जीवनं निजम् ॥
५० ॥
बिम्बीदलसमा भूमिरङ्गं बिम्बीफलोपमम् ॥
बिम्बीवक्त्रन्तु तद्विद्यात्तच्चर्वं तिक्ततय्यते ।
पित्तश्लेष्मविकाराणां प्रशमाय प्रयुज्यते ॥५१॥
प्रियङ्गुसदृशमङ्गं भूमिश्च कपिलाकृतिः ।
फलवक्त्रमिदं प्रोक्तं घाते धूम्रं वमत्यपि ॥५२॥
अङ्गं सर्षपपुष्पाभं भूमिश्चैव सितासिता ।
एतत् सर्षपवक्त्रं स्यात् घाते वह्निं वमत्यपि ॥
अपि कुड्मलिका याति एतदत्यन्तकोमलम् ।
एतत्प्रसादात् नृपतिः शत्रून् बाधयते महीम् ॥
५३ ॥
नीलीरससमा भूमिरङ्गं नीलीतरङ्गवत् ।
नीलीवक्त्रमिदं दृष्टं घाते वह्निशिखां वमेत् ॥
एष खड्गवरो नृणामरिष्टभयनाशनः ॥५४॥
रक्ताक्तिको महारेखा भूमिश्चैव सितासिता ॥
रक्ताङ्गमिति जानीयाद्वैरिपक्षविनाशनम् ।
घातेन यस्तु रक्तां वा नीलां वा वमते शिखाम् ॥
रक्तस्पर्शनमात्रेण स्वयमेव निहन्ति ।
पतेऽस्य रक्तमयथुस्त्वथा दाहश्च जायते ॥५५॥
अङ्गं वचादलसमं भूमिश्चैव सितासिता ।
वचावक्त्रमिदं ज्ञेयं तनुते वाह्निरस्य नाशनम् ॥
एष खड्गवरो राज्ञा साधनीयः प्रयत्नतः ॥५६॥
रसोनाङ्कुरसमं त्वङ्गं भूमिस्तस्य रसोपमा ॥
रसोनवक्त्रं जानीयात् घाते वह्निं वमत्यपि ।
अस्य धावनतोयेन आमवातविनाशनम् ॥५७॥
निरङ्गा निर्मला भूमिर्धारा तीक्ष्णा खरः स्वरः ।
सुमनावक्त्रमेतत् स्यात्कुवि नात्यन्तदुर्लभम् ॥५८॥
मल्लिकासदृशा दीर्घास्तन्वो रेखाः सुविस्तराः ।
जिह्वीवक्त्रमिदं नाम सर्व्वकामार्थसाधकम् ॥५९॥
अङ्गं शमीपत्रसमं भूमिर्धूम्रा सितासिता ।
शमीवक्त्रमिदं ज्ञेयं शत्रुवर्गसदाहकम् ॥
घातेषु वमते वह्निं बहती वह्निदीपनम् ॥६०॥
रोहितपक्षसदृशमङ्गं भूमिः सितासितापि ।
सूक्ष्मा गम्भीरस्वरस्तुल्यं धारा तीक्ष्णा सिता
भवेत्तथा ॥
रोहिताख्यमिदं वक्त्रं सर्व्वारिष्टविनाशनम् ।
वह्निसंस्पर्शमात्रेण किञ्चिच्चिमिचिमायते ।
इत्ययं दुर्लभः खड्गो देवानामपि जायते ॥६१॥
शुकपत्राक्षकाकारमङ्गं भूमिः सितासिता ।
शुकीवक्त्रमिदं प्रोक्तं घातं तरति वारिणि ॥
एष खड्गोत्तमो राज्ञां निपक्षक्षयनाशकः ।
कदाचिल्लभ्यते भाग्यैर्लभ्यते लभ्यते महीं ॥६२॥
अङ्गं मारिषपत्राभं भूमिः स्वाद्विबलच्छविः ।
इत्ययं मारिषाङ्कः स्यात् पृथिव्यां नातिदुर्लभः ॥
६३ ॥
भृङ्गराजस्य पुष्पाभमङ्गं भूमिर्द्वितनभा ।
आघातं सहते नैव एव खड्गाधमो मतः ॥६४॥
धारा तीक्ष्णा खुराकारा भूमिरङ्गविवर्जिता ।
आघातं सहते घोरं घाते वह्निं वमत्यपि ।
खुराङ्गमिति जानीयात् पृथिव्यां नातिदुर्ल-
भम् ॥६५॥
निर्मला समला भूमिर्भवेच्चैव यदा यदा ।
मन्दा तीव्रा भवेद्धारा तद्धि खड्गस्य लक्षणम् ॥६६॥
नीलाञ्जनसमा भूमिरङ्गं जलतरङ्गवत् ।
मेघाङ्गमिति जानीयाच्छाखी शीर्णं भवत्यपि ॥
एष खड्गाधमः ख्यातो यदीच्छेद्भूतिमात्मनः ।
भर्त्तुः प्रतापं शमयेन्नविनिर्म्म यथा घनः ॥६७॥
मन्दा धारा भृशं गाढा भूमिरङ्गविवर्जिता ।
पर्व्वताङ्गमिदं नाम सर्व्वत्रैवोपलभ्यते ॥६८॥
अङ्गं गुञ्जाफलसमं भूमिर्म्मीनरसोपमा ।
गुञ्जावक्त्रमिदं दृष्टं लग्नं भवति वर्षति ॥
घाते सिन्दूरसङ्काशं रजो वमति चायसम् ।
एष खड्गवरो राज्ञा भाग्यादेवोपयुज्यते ॥
अस्य प्रभावान्नास्ति यन्न साधयते नृपः ॥६९॥
अङ्गं लशुनराकारं भूमिश्चैव सितासिता ।
धारा तीक्ष्णा वमति च घाते वह्निसमाः
शिखाः ।
शरवक्त्रमिदं ज्ञेयं राज्ञां वाञ्छितसिद्धये ॥७०॥
दूर्व्वादलनिभा भूमिर्धारा तीक्ष्णा खरः स्वरः ।
घातेन वमते वह्निं दूर्व्वावक्त्रं सुदुर्लभम् ॥७१॥
अङ्गं विल्वदलाकारं भूमिश्चैव सितासिता ।
विल्ववक्त्रमिदं घाते नीलपीतं वमेच्छिखे ॥
एष खड्गवरः प्रोक्तः शत्रूणां कुलनाशनः ॥७२॥
मसूरदलसङ्काशा भूमिरङ्गं मसूरवत् ।
मसूराङ्गमिदं घाते रजो वमति चायसम् ॥७३॥
शोणपुष्पनिभा रेखा दीर्घा भूमिः सितेतरा ।
शोणाङ्गमिति जानीयात् खड्गं परमदुर्ल-
भम् ॥७४॥
शटीदलसमा भूमिरङ्गं तत्कुसुमोपमम् ।
शटीवक्त्रमिदं प्रायो लभ्यते सुखवत्तरम् ॥७५॥
मार्ज्जाररोमसदृशमङ्गं भूमिः सितेतरा ।
मार्ज्जाराङ्गमिदं नाम्ना रोगशोकभयावहम् ।
एष खड्गाधमः ख्यातो यदीच्छेद्भूतिमात्मनः ॥
७६ ॥
तैलकीटपक्षसदृशमङ्गं यस्मिन् प्रतीयते ।

विद्यात् केतकवर्णं तत् धारायामक्षसुन्दरम्॥”७७
लौहप्रदीपस्य।
“अङ्गं मर्कटलाङ्गुलिभं भूमिर्मूषिकसच्छविः।
घातेन वमते शुक्रो धूम्रो मौर्वी भवेत्ततः॥
मौर्व्याङ्गमिदमुत्कृष्टं यशःकीर्त्तिजयावहम्॥७८॥
निष्कं तीक्ष्णं खरं गाढ़ं घाती यद्युद्वमेत् जलम्।
छिन्नताम्रनिभं लौहं वज्राङ्गमिति तद्वदेत्॥७९॥
कलायपुष्पसदृशमङ्गं भूमिः सितासिता।
कलायवर्णं जानीयात् तद्घाते पाक उच्यते॥८०॥
अङ्गं चम्पकपुष्पाभं भूमिः कृष्णा तथा सिता।
धूम्रो घाती वमेच्छीतं तिक्तं तस्य जलं भवेत्।
इदं चम्पकवर्णं स्यात् सर्व्वत्र विजयप्रदम्॥८१॥
अङ्गं वज्रादलसमं भूमिः शुक्ला तथेतरा।
वज्राङ्गमिदं ज्ञेयं नानाभावं भवेद्ध्रुवम्॥
हन्त्ययं वातरोगाणां नाशने परमौषधम्॥८२॥
अङ्गं वटारोहसमं भूमिर्मेदकच्छविः।
वटवर्णमिदं ज्ञेयं खरं खड्गाधमं बुधैः।
एतस्य घर्षमात्रेण नरो मुच्येत सम्पदा॥८३॥
वंशनीलीसमा भूमिः खरधारा सिताकृतिः।
वंशाङ्गमिति जानीयाद्वंशवृद्धिकरं परम्॥८४॥
भूमिः शालदलाकारा अङ्गं लघु सितासितम्।
शालाङ्ग एव खड्गः स्यात् पुण्यः सर्व्वार्थदायकः।
अयं घाती वमेद्वह्निं धारा चाप्ययथा भवेत्॥८५॥
भूमिः सितासिता वापि अङ्गं ज्येष्ठीसमं लघु।
ज्येष्ठीवर्णमिदं निन्द्यं न स्पृश्यं वा हितेच्छुभिः॥
८६॥
पुराणकालसदृशमङ्गं भूमिः सितासिता॥
आलवर्णमिदं पुण्यं प्रभुसम्पत्तिनाशनम्।
यदि घाती वमेन्नीलां धूम्रां वह्निं वमेच्च वा॥
तदैव दुर्लभः खड्गो नान्यथा भयहेतुकः॥८७॥
अङ्गं पिपीलिकाकारं भूमिर्धूम्रा तथासिता॥
पिपीलिकाङ्ग इत्येव तद्घाते कण्डुसम्भवः।
स्वयं यदि भवेद्रूक्षः घाती पूज्यतमस्तदा॥८८॥
नलपत्रसमा भूमिरङ्गन्तत्कुसुमोपमम्।
नलाङ्गमिति जानीयाद्भर्त्तुः सर्व्वार्थसाधकः॥
८९॥
निरङ्गा निर्म्मला भूमिर्घृष्टं घृष्टं वमेज्जलम्।
दृढ़ा धारा भृशं स्थूला आघातं सहते न च॥
रजोवर्णमिदं निन्द्यं धनुष्यां विजयावहम्॥९०॥
कुष्माण्डबीजसदृशमङ्गं भूमिः सितासिता॥
कुष्माण्डवर्णं जानीयात्तद्घाते वेगनिग्रहः॥९१॥
अङ्गं दूरोमसदृशं भूमिर्धूम्रा सितासिता।
रोमाङ्गमिति जानीयात्तद्घाते पिडकोद्गमः॥९२॥
भूमिः कुष्ठीदलसमा अङ्गं तत्कण्टकोपमम्॥
धारा तीक्ष्णा रक्तवर्णा लघुमानं खरा स्पृशा।
कुष्ठाङ्गः खड्ग इत्येव तद्घाते दाहकृद्भ्रमः॥
सुखाधिकर्णनाशानां दाहः पाकश्च जायते।
अयं यदि च सर्पाणां पश्चादुपरि निक्षिपेत्॥
पश्चाद्विकारमाप्नोति सर्पो लोटयति शिरः।
अस्य धावनतोयेन कुष्ठरोगविनाशनम्॥९३॥
कर्कन्धुदलपृष्ठाभा भूमिरङ्गञ्च तत्समम्।
कर्कन्धुवर्णं जानीयात्तद्घाते दाहनाशनम्॥

एष खड्गाधमश्चान्यो वितथा यदि निक्षिपः॥
९४॥
रक्तं बकुलपुष्पाभं भूमिस्तत्पत्रसन्निभा॥
बकुलाङ्गमिदं पूज्यं घाती सुरभिगन्धवत्।
तस्मिन्नमलीमध्ये वह्निना न चाल्यते॥९५॥
अङ्गं संमिलितं यस्मिन् विचित्राङ्गमितीर्य्यते।
सर्व्वेषां दर्शने चापि तीक्ष्णधारः खरस्वरः॥
एष काञ्चनवर्णः स्याद्भूयसा दैवोपलभ्यते।
नैनं प्राप्यापि वर्द्धन्ते शैवालिवादयोऽपि च॥
९६॥
भूमिः कृष्णा निरङ्गा चेद्धारा तीक्ष्णा दृढ़ापि च।
आघातं सहते घोरं रक्तं घर्षेण यो विषेत्॥
घातेन वह्निं वमति ध्रुवं वाप्यतिवर्णवान्।
महिषाङ्गः स वै खड्गः पृथिव्यां नातिदुर्लभः॥
९७॥
अव्यक्तनिर्म्मला भूमिः शरीरं प्रतिविम्बितम्।
धारा तीक्ष्णा खरस्तीक्ष्णः स्वच्छाङ्गं तद्विनिर्द्दिशेत्॥९८॥
तस्मिन् यदा भवेद्रेखा जङ्घा भल्लाख्यकं तदा॥९९॥
अस्मिन्नपि भवेद्वक्रा रेखा वक्राभिधन्तु तत्॥१००॥
एतत्त्रितयमुद्दिष्टं खड्गानां प्रवरं बुधैः।
प्रायशो लभ्यते लोके यदि सर्व्वगुणावहम्॥
इतीदं निखिलं प्रोक्तं वर्णानां लक्षणं मया।
प्रयत्नैर्लिखितं यत्तु सर्व्वेषां हितकाम्यया॥
इतः परन्तु लौहानां लक्षणं यच्च लक्ष्यते।
तस्य दासो भवाम्येव प्रतिज्ञेति कृता मया॥
द्विलिङ्गमिश्रमालोक्य मिश्राङ्गमिति निर्द्दिशेत्।
सर्व्वेषामङ्गमालोक्य सर्व्वाङ्गमिति निर्द्दिशेत्॥”
इति खड्गपरीक्षायामङ्गाध्यायो द्वितीयः॥ * ॥
खड्गस्य रूपाणि यथा,—
“नीलीकलायकुसुमच्छविरञ्जनाभा
या चन्द्रनीलमणिकाचमणिप्रभा च।
भूमिश्च या मरकतप्रतिमावभासा
खड्गस्य नीलमिति रूपमिदं वदन्ति॥
तत्र यन्निन्दितान्यङ्गान्यरिष्टानि बहून्यपि।
उत्पन्ने बहुदोषापि तथापि गुणवत्तरम्॥१॥
या कालकाम्बुदमसीरसकालसर्प-
धूम्रान्धकारकचभारसमा विभाति।
भूमिश्च या भ्रमरबन्धुसमावभासा
खड्गस्य कृष्णमिति रूपमिदं वदन्ति॥
अथ नैमाणि सम्यक्तौ अरिष्टान्यशुभानि च।
साधारणमिदं रूपं प्राह नागार्ज्जुनो मुनिः॥२॥
या प्रावृषेण्यघनमेचकसमानवर्णा
गोमेदरक्तसदृशापि च यस्य भूमिः।
खड्गस्य पिङ्गमिति रूपमिदं वदन्ति
भर्त्तुर्यशोविजयधनसुखकारणाय॥३॥
या मन्दधूमसदृशा च शिरीषपुष्प-
तुल्या विभाति मलिनापि च खड्गभूमिः।
नागार्ज्जुनो वदति धूम्रमिदं हि रूपं
भर्त्तुर्यशोधनजनावलिवर्द्धनाय॥४॥
द्विरूपं मिश्रितं ज्ञात्वा बहुरं प्रवदेद्बुधः।
त्रिभी रूपैः समेतन्तु खड्गं त्रिपुरसञ्ज्ञितम्॥

रूपैश्चतुर्भिः संयुक्तं चतुरं खड्गमुत्तमम्॥”
इति लौहार्णवस्य खड्गपरीक्षायां अध्यायस्तृतीयः॥ * ॥
“जातिश्चतुर्विधा प्रोक्ता खड्गानां या पुरा मया।
सम्प्रत्यपि प्रयत्नेन तासां लक्षणमुच्यते॥
शुक्लाङ्गः शुक्लवर्णश्च सुनेत्रः सुस्वरश्च यः।
लघुघर्षः सुस्निग्धतीक्ष्णधारो महागुणः॥
खड्गं ब्राह्मणजातिं तं प्राह नागार्ज्जुनो मुनिः।
अस्य क्षते भवेच्छोथो घोरः सर्व्वाङ्गगोचरः॥
मूर्च्छा पिपासा दाहश्च ज्वरो मनुजस्य जायते।
अदृष्टं निष्कलङ्कमलदोषविवर्जितम्।
मलिनत्वं न लभते निर्म्मलं कुरुते परम्।
तद्धारादिव्यकिरणप्रदीप्त इव लक्षितः॥
एतेन सर्व्वं न तु करं पुरुषस्य हि धारितः।
गायत्र्युच्चारमात्रेण खरतां भजति ध्रुवम्॥
एष खड्गवरः सर्व्वमरिष्टं नाशयेद्ध्रुवम्।
अस्य प्रसादात् पुरुषस्त्रिलोकामपि साधयेत्॥
तस्मादेव मनुष्याणां सुलभो न हि भूतले।
इयन्ते प्रायशः स्वर्गे कुशद्वीपे हिमालये॥१॥
धन्वसं महाकारं तीक्ष्णधारं खरस्वरम्।
सर्व्वाघातसहं सर्व्वनेत्रवल्कराकरम्॥
खड्गं क्षत्रियजातिं तं जानीयात् खड्गकोविदः।
अस्य क्षते भवेद्दाहः कृशानाद्यो ज्वरो भ्रमः॥
मृत्युश्च जायते घाती वमेद्धिक्कयात् मधुन्।
संस्कारे चाप्यसंस्कारे नैर्म्मल्यं तस्य लभ्यते॥
घातेऽप्यघाती खरता वह्निं चाप्यतितीक्ष्णता।
रक्तवर्णसमावेश विरोदन्तरमन्तरम्॥
अयं खड्गवरः पूज्यो मनुष्यैरपि लभ्यते॥२॥
नीलवर्णः कृष्णवर्णः संस्कारे निर्म्मलो भवेत्॥
घातेन खरता चास्य घातदुःखं निकृन्तति।
वैश्यजातिरयं खड्गः क्षते अङ्कुरदर्शनम्॥
नात्युत्कृष्टो नातिहीनः सर्व्वत्रैवोपलभ्यते॥३॥
सजलाम्भोदसङ्काशः स्थूलधारो लघुस्वरः॥
संस्कारे चैव मलिनः घाते चापि खरेतरः।
शूद्रजातिरयं खड्गः क्षते नात्यपि वेदना॥
दूरादेषोऽधमस्त्याज्यो यदीच्छेद्धितमात्मनः।
प्रायशः सर्व्वलोकेषु स्वयमेवोपलभ्यते॥४॥
द्वयोर्लक्षणमालोक्य जारजं खड्गमादिशेत्।
त्रयाणां लक्षणेनैव त्रिजातिं खड्गमादिशेत्।
चतुर्णां लक्षणेनैव जातिसङ्करमुच्यते॥”
इति लौहार्णवस्य खड्गपरीक्षायां जात्यध्यायः॥ * ॥
अथ त्रिंशन्नेत्राणि लक्षयामि।
“चक्राकारं यदा नेत्रं खड्गस्याङ्के प्रदृश्यते।
तं चक्रनेत्रं जानीयात् भर्त्तुः सर्व्वार्थसाधनम्॥
अनेनैकेन खड्गेन कृत्स्नां साधयते महीम्॥१॥
प्रफुल्लपद्मसङ्काशं नेत्रं पद्मदलोपमम्॥
यदि वा दृश्यते खड्गे पद्मनेत्रं समादिशेत्।
अयं खड्गवरो यत्र तत्रैव कमलालया॥२॥
ऊर्द्ध्वं स्थूला यदा रेखा गदाकारा प्रतीयते।
गदानेत्रमिदं विद्धि सर्व्वशत्रुनिसूदनम्॥३॥
शङ्खाकारं यदा नेत्रं खड्गमध्येऽभिदृश्यते।

अरिष्टमेकमेव व्याधिरहितं शुभावहम् ।
अन्योऽन्यमशुभं कुर्य्यादृष्टिवश्च हि विषं यथा ॥
एकमारभ्य यावत्तमरिष्टं प्राह नान्यथा ।
यथोत्तरं द्विगुणितं फलमाहुर्मनीषिणः ॥
इति खड्गपरीक्षायामरिष्टाध्यायः षष्ठः ॥*॥
अथ द्विविधा भूमिः ।
दिव्यभौमविभागेन भूमिर्या द्विविधा मता ।
दिव्या दिवि समुत्पन्ना भौमा भूमिसमुद्भवा ॥
तल्लक्षणमशेषेण निगद्यते तन्निबोधत ।
देवदानवयोर्मध्ये खड्गाखड्गिरभूत् पुरा ॥
ते खड्गाः पुण्यदेशेषु केषु केषु प्रतिष्ठिताः ॥
दिव्यलक्षणं यथा,—
ये खड्गाः सूक्ष्मधारा अप्रमतिलघवो निर्म्मलाङ्गाः सुनेत्राः
ये दिव्याश्चारुरूपाः सुविमलतनवश्चाप्यसंस्कारयोगात् ।
दुर्भेद्या दुर्घटाश्च ध्वनिगुणगुरवो यत्नतो दारुपाकौ
ते दिव्याः कुर्व्वतेऽमी कुलधनविजयश्रीयशोवृद्धिमायुः ॥१॥
अथ भौमलक्षणं हर्षकारीति ।

पूर्व्वं मघेशेन विषाणि यानि
भुक्तानि तेषां पतितास्तु बिन्दवः ।
यस्मिन् प्रदेशे स स एव देशः
कालायसानामाकरतां जगाम ॥
पुरामृतं क्षीरसमुद्रमध्या-
दुत्पाद्य संगृह्य ययुः सुरेन्द्राः ।
तद्बिन्दवो यत्र निपेतुरेव
शुद्धायसामाकरतां जगाम ॥

ये विषोत्था भवन्त्याजाः खराङ्गाः सम्भवन्ति हि ।
मूर्च्छादाहज्वरोन्मादशोकहिक्कावमीकराः ॥
येऽमृतोत्थाः कर्पुराङ्गा मन्दाङ्गाः सम्भवन्ति च ।
बलीपलितमालिन्यजराव्याधिविनाशनाः ॥
यत्रैव पतितं यत्तु तत्तदाकरताङ्गताः ॥
तद्यथा,—

वाराणसीमगधसिंहलभूमिभागे
नेपालभूमिषु तथाङ्गमहीप्रदेशे ।
सौराष्ट्रकेऽप्यतरधन्यमहीविभागे
शुद्धायसां क्षितिवराः प्रवदन्ति सन्त ॥

तद्यथा,—
वाराणसेयाः सुस्निग्धास्तीक्ष्णधाराः सदाङ्गिनः ।
लघवः सुखच्छेद्या ये याश्चाभेद्यशालिनः ॥
मागधाः कर्कशाः स्थूलधारा गूढतराङ्गिनः ।
गुरवो दुःखच्छेद्याः खड्गा ज्ञेया विचक्षणैः ॥
नैपालदेशप्रभवा निरङ्गा निश्चलाश्च ये ।
ज्ञेयाः सदङ्गा मलिना लघवः स्थूलधारिणः ॥
कालिङ्गा गुरवः स्वच्छा वक्राङ्गास्तनुदैर्घ्यवः ।
सौराष्ट्रा निर्म्मलाः स्निग्धाः सुवक्राङ्गा भृशं खराः ॥
सिंहलद्वीपजातानां चतुर्द्धा भेद उच्यते ।
केचित् सदङ्गा गुरवः कर्कशाः स्निग्धधारिणः ॥
केचित् सदङ्गा लघवः सुस्निग्धाः स्थूलधारिणः ।
एको लघुश्च निरङ्गश्च ज्ञेया हि द्विजालयः ॥
वाराणसात् द्विगुणश्चौड्रं कालिङ्गश्चतुरुत्तरः ।
कलेः शतगुणं भद्रं मगधस्य सहस्रधा ।
तस्मात् षड्गुणः सौराष्ट्रो विंशद्भिर्गुणैः ।
ततः कोटिगुणश्चैव कृष्णधारः प्रशस्यते ॥"
इत्यादिकं हस्तायसौपयौगिकमेव न तु खड्गे इष्टफलम् ॥ यदाह ।
आकारस्तु सौराष्ट्राणां वर्ज्यं खड्गाय युज्यते ।
तथाच ।
ये खड्गास्तीक्ष्णधारा अप्रमतिगुरवः षड्गुणाढ्याः सुभेद्याः
केचित् साङ्गा निरङ्गाः कति च न समता निर्म्मलाः केचिदेव ।
ते भौमाः कुर्व्वतेऽमी धनविजयबलं षड्गुणा निर्गुणा वा
ते दुःखं शोकमुग्रं दधति बलकुलश्रीयशोनाशकास्ते ॥
इति खड्गपरीक्षायां भूम्यध्यायः सप्तमः ॥*॥
अथाष्टधा ध्वनिः ।
ध्वनिरष्टविधः प्रोक्तो यः पूर्व्वं शस्त्रसंग्रहे ।
तेषामपि निबध्नामि सगुणं लक्षणाष्टकम् ॥
तद्यथा,—
पूर्व्वं चत्वारः शुभदाः परे निन्द्यास्तदाश्रयाः ।
विचार्य्य खड्गमागत्य कर्णाभ्यां खड्गकोविदैः ॥
घोरस्तार इति ख्यातो द्विविधः खड्गकोविदैः ।
घोरः स्यात् सुखसम्पत्त्यै तार उच्चाटने मतः ॥
यत्र हंसरवस्येव खड्गे नखहते ध्वनिः ।
हंसध्वनिरयं खड्गः सकलार्थप्रसाधनः ॥१॥
कांस्यशब्द इवाभाति यस्मिन् खड्गे हते ध्वनिः ।
कांस्यध्वनिरयं खड्गः प्राह नागार्ज्जुनो मुनिः ॥२॥
अभ्रस्य लक्षणं पतितम् ॥३॥
ढक्काशब्द इवाभाति यस्मिन् खड्गे हते ध्वनिः ।
ढक्काध्वनिरयं खड्गः सर्व्वशत्रुनिसूदनः ॥४॥
काकस्वर इवाभाति यस्मिन् खड्गे हते ध्वनिः ।
काकस्वरोऽयं खड्गः स्यात् श्रीयशःकुलनाशनः ॥५॥
तन्त्रीस्वरसमो यस्मिन् भवेत् खड्गे हते ध्वनिः ।
तन्त्रीध्वनिरयं खड्गः कुलश्रीधननाशनः ॥६॥
खरस्येव ध्वनिर्यस्मिन् खरध्वनिरयं मतः ।
श्रीयशोज्ञानविज्ञानजयतेजोविनाशनः ॥७॥
प्रस्तरस्येव यः खड्गः स निन्द्यः खड्गलक्षणे ॥८॥
गभीरतारध्वनिता खड्गस्याशुभलक्षणम् ।
उत्तानमन्दध्वनिता खड्गस्याशुभलक्षणम् ॥
अपाङ्गेनवर्णोऽपि खड्गः सुध्वनिरुत्तमः ।
अन्धः कुरूपो मनुजो यथा भुवि सुगायनः ॥
सर्व्वलक्षणसम्पन्नः खड्गो यो ध्वनिवर्ज्जितः ।
स निन्द्यः सुन्दराङ्गोऽपि यथा वाक्यविवर्ज्जितः ॥
नखेन चाथ दण्डेन तथा लौहशलाकया ।
कोटेन शर्कराभिर्वा ध्वनिविज्ञानमुच्यते ॥"
इति खड्गपरीक्षायां ध्वन्यध्यायोऽष्टमः ॥*॥
अथ द्विविधं मानम् ।
यन्मानं द्विविधं प्रोक्तं तस्य लक्षणमुच्यते ।
उत्तमाधमभेदेन भेदो हि द्विविधो मतः ॥
उत्तमं यद्विधानं स्यादङ्गुलमानं प्रकीर्त्तितम् ॥१॥
अधमं तच्च यत् खड्गं गुरुमानं प्रकीर्त्तितम् ॥२॥
तत्पुनस्त्रिविधं प्रोक्तमादिमध्यान्तभेदतः ।
यो मुष्टिविंशतिसमायततीक्ष्णधारो
भर्त्तुर्भवेत् प्रसरतोऽपि षडङ्गुलीभिः ।
मानेन चाद्यफलिकः स हि खड्गमध्ये
नातिप्रलम्बनविलम्बफलप्रदः स्यात् ॥
यो द्वादशाष्टनवमुष्टिभिरायतः स्यात्
मध्यो भवेत् प्रसरतोऽपि चतुर्थभागः ।
तावत्पलैः परिमितस्तु ततोऽधिको वा
खड्गाधमो धनयशःकुलनाशनाय ॥
नागार्ज्जुनोऽपि ।
यावत्यो मुष्टयो दैर्घ्ये तदर्द्धाङ्गुलयो यदा ।
प्रसरे तच्चतुर्थांशमितिर्वै मानमुत्तमम् ॥
यावत्यो मुष्टयो दैर्घ्ये प्रसरे तत्त्रिभागिकः ।
पलैस्तद्द्विगुणितः स खड्गो मध्य उच्यते ॥
यावत्यो मुष्टयो दैर्घ्ये तुर्य्यांशः प्रसरे तु तत् ।
अधमः कीर्त्तितः खड्गस्तत्समो वाधिकः पलैः ॥
भौमानामिदमुद्दिष्टं दिव्यास्तु लघवो मताः ॥"
इति खड्गपरीक्षायां मानाध्यायः ॥ * ॥
भोजस्तु ।
"दीर्घता लघुता चैव स्वरविस्तीर्णता तथा ।
दुर्भेद्यता सुघटता खड्गानां गुणसंग्रहः ॥
खर्व्वता गुरुता चैव मन्दता तनुता तथा ।
सुभेद्यता दुर्घटता खड्गानां दोषसंग्रहः ॥

इति निखिलमुदारमुक्तमत्र
बहुतन्त्रेषु निरूप्य खड्गयष्टेः ।
नृपतिरिति विचिन्त्य यो विधत्ते
स चिरतरां श्रियमुच्छ्रितां लभेत ॥"

इति युक्तिकल्पतरूक्तखड्गपरीक्षा समाप्ता ॥

तरसं, क्ली, (तॄ + बाहुलकात् असच् ।) मांसम् । इत्यमरः । २ । ६ । ६३ ॥ (यथा, कात्यायनश्रौतसूत्रे ।
"तरसमयाः पूर्व्वाग्निभागाः ॥"
"तरसमया मांसमयाः ।" इति कर्कः ॥)

तरस्थानं, क्ली, (तराय अवतरणाय यत् स्थानम् । तरस्य स्थानं वा ।) घट्टः । इति जटाधरः ॥

तरस्वान्, [त्] त्रि, (तरो बलं वेगो वा अस्यास्तीति मतुप् । मस्य वः ।) शूरः । वेगी । इति व्याकरणम् ॥ (चतुर्थमनुपुत्त्रविशेषः । यथा, हरिवंशे । ७ । ८८ ।
"तरश्भीरुर्व्याप्यश्च तरस्वानुग्र एव च ।
अभिमानी प्रवीरश्च जिष्णुः सङ्क्रन्दनस्तथा ॥")

तरस्वी, [न्] त्रि, (तरो वेगः बलं वास्त्यस्य । तरस् + "अस्मायामेधास्रजो विनिः ।" ५ । २ । १२१ । इति विनिः ।) शूरः । वेगी । इत्यमरः । ३ । ३ । १२७ । (यथा, भागवते । ८ । १० । ३१ ।
"राहुणा च तथा सोमः पुलोम्ना युयुधेऽनिलः ।

निशुम्भशुम्भयोर्देवी भद्रकाली तरस्विनी ॥”)
गरुडे वायौ च पुं । इति राजनिर्घण्टः ॥
तरान्धुः, पुं, ( तराय तरणाय तरे तरणे वा अन्धुरिव अतिगभीरमध्यदेशत्वात् तथात्वम् । ) नौकाविशेषः । भड इति भाषा । तत्पर्य्यायः । चोडः २ वहनम् ३ वार्वटः ४ वहित्रम् ५ । इति त्रिकाण्डशेषः ॥
तरान्धुः, पुं, (तराय तरणार्थं अन्धति पर्य्याप्नोतीति । अन्ध+उन् ।) नौकाविशेषः । इति हारावली ॥
तरिः, स्त्री, (तरत्यनया इति । तॄ+“अच इः ।” उणां । ४ । १३८ । इति इः । ) नौका । इत्यमरः । १।१०।१० ॥ ( यथा, महाभारते । १ । १०० । ४८ ।
“सात्यवीहाशकन्यापि धर्म्मार्थं वाहये तरिम् ॥”)
दशा । वस्त्रादिपेटकः । इति हेमचन्द्रः ॥
तरिकः, पुं, (तराय तरणाय हितः । तॄ+ठन् । ) प्लवः । इति त्रिकाण्डशेषः ॥ ( तरणे तरणनिमित्तकदेयशुल्केऽधिकारोऽस्त्यस्य । तरणशुल्कग्रहणाधिकारी । यथा, याज्ञवल्क्ये । २ । २६६ ।
“तरिकः स्थलजं शुल्कं गृह्णन् दाप्यः पणान् [दश ॥”)
तरिका, स्त्री, ( तरिक+टाप् । ) नौका । इति शब्दरत्नावली ॥
तरिणी, स्त्री, ( तरणक्रियां तत्वेनास्त्यस्याः इति इनिः ङीप् च ।) नौका । इति हेमचन्द्रः ॥
तरिता, स्त्री, ( तर+इतच् । ) तर्ज्जनी । इति शब्दचन्द्रिका ॥ गञ्जनम् । गाँजा इति भाषा । यथा, कुलार्णवतन्त्रे ।
“अविद्या कालकूटश्च तालकूटश्च मुस्तरम् ।
अहिफेनं खर्ज्जूरसस्तारिका तरिता तथा ॥”
तरिरथः, पुं, ( तरेर्नौकाया रथ इव तत्परिचालनसाधनत्वम् । ) अरित्रम् । इति हारावली ॥
तरीः, स्त्री, ( तरत्यनया इति । तॄ+“अवितॄस्तृतन्त्रिभ्य ईः ।” उणां । ३ । १५८ । इति ईः । ) नौका । ( यथा, माघे । ३ । ७६ ।
“तरीषु तत्रत्यमफल्गुभाण्डम् ॥”)
गदा । वस्त्रादिपेटकः । इत्युणादिकोषः ॥ धूमः । इति त्रिकाण्डशेषः ॥ द्रोणी । इति जटाधरः ॥ दशा । इति मेदिनी । रे, ४० ॥
तरीषः, पुं, ( तॄ+“तॄभूवहिवसिभासिसाधिगडि-मण्डिजिनन्दिभ्यश्च ।” इत्यादि । “ॠतन्यञ्जि—” इति ईषन् । ) शोभनाकारः । भेलः । व्यवसायः । इत्युणादिकोषः ॥ समुद्रः । समर्थः । इति संक्षिप्तसारे उणादिवृत्तिः ॥ स्वर्गः । इति मेदिनी । षे, १७ ॥
तरीषी, स्त्री, ( तरीष+संज्ञायां ङीष् । ) इन्द्रकन्या । इति मेदिनी । षे, १८ ॥
तरुः, पुं, ( तरति समुद्रादिकमनेनेति । तॄ+“भृमृशीतॄचरीति ।” उणां । १ । ७ । इति उः । ) वृक्षः । इत्यमरः । २ । ४ । ५ ॥ (यथा, रघुः । ३ । ७० ।
“मुनिवनतरुच्छायां देव्या तया सह शिश्रिये ॥”)
तरुकूचिः, पुं, ( तरौ वृक्षे कूचयतीति । कुच+इन् । ) वागुदपक्षी । इति त्रिकाण्डशेषः ॥
तरुजीवनं, क्ली, ( तरोर्जीवनं जीवनकारणम् । ) वृक्षमूलम् । इति शब्दचन्द्रिका ॥
तरुणं, क्ली, (तॄ+“वो रश्च लो वा ।” उणां ।३ । ५४ । इति उनन् ।) कुब्जपुष्पम् । इति मेदिनी । णे, ४९ ॥
तरुणः, पुं, ( तॄ+उनन् ।) स्थूलजीरकः । एरण्डः । इति राजनिर्घण्टः ॥
तरुणः, त्रि, ( तरति प्लवते प्रमोदसलिले इति । तॄ+वो रश्च लो वा ।” उणां । ३ । ५४ । इति उनन् । ) युवा । इति मेदिनी । णे, ४९ । (यथा, महाभारते । १ । ४० । २६ ।
“तरुणस्तस्य पुत्त्रोऽभूत्तिग्मतेजा महातपाः ॥”)
नूतनः । इति धरणिः ॥ (यथा, छन्दोमञ्जर्य्याम् ।
“तरुणं सर्षपशाकं नवौदनं पिच्छिलानि दधीनि ।
अल्पव्ययेन सुन्दरि ! ग्राम्यजनो मिष्टमश्नाति ॥”)
तरुणज्वरः, पुं, ( तरुणश्चासौ ज्वरश्चेति । ) सप्ताहावधिज्वरः । (यथा, चक्रदत्तः ।
“आसप्तरात्रं तरुणं ज्वरमाहुर्मनीषिणः ॥”
तरुणदधि, क्ली, (तरुणं तरुणलक्षणोक्तं दधीति ।) पञ्चदिनातीतदधि । इति वैद्यकम् ॥
“शुष्कं मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि ।
प्रभाते मैथुनं निद्रा सद्यःप्राणहराणि षट् ॥”
इति चाणक्ये । ६४ ॥
तरुणी, स्त्री, ( तरुण+गौरादित्वात् ङीष् । ) द्वितीयवयाः स्त्री । (यथा,—
“तनस्तु तरुणी ज्ञेया द्वात्रिंशद्वत्सरावधि ।
निदाघशरदोर्बाला हिता विषयिणी मता ॥
तरुणी शीतसमये ॥”
‘नित्यबाला सेव्यमाना नित्यं वर्द्धयते बलम् ।
तरुणी ह्रासयेच्छक्तिम् ॥”
“वृद्धोऽपि तरुणीं गत्वा तरुणत्वमवाप्नुयात् ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
भूयोभूयः प्रवर्त्तमानरजाः स्त्री । इत्यमरटीकायां सारसुन्दरी ॥ तत्पर्य्यायः । युवती २ । इत्यमरः । २ । ६ । ८ ॥ तरुणी ३ युवतिः ४ । इति भरतः ॥ यूनी ५ दिक्करी ६ धनिका ७ धनीका ८ । इति शब्दरत्नावली ॥ घृतकुमारी । दन्तीवृक्षः । चोडानामगन्धद्रव्यम् । पुष्पविशेषः । सेउती इति भाषा ॥ तत्पर्य्यायः । सहा २ कुमारी ३ गन्धाढ्या ४ चारुकेशरा ५ भृङ्गेष्टा ६ रामतरुणी ७ सुदला ८ बहुपत्रिका ९ भृङ्गवल्लभा १० । इति राजनिर्घण्टः ॥ सेवती ११ । यथा, नारसिंहपुराणे ।
“चम्पकात् पुष्पशतकादशोकं पुष्पमुत्तमम् ।
अशोकात् पुष्पसाहस्रात् सेवतीपुष्पमुत्तमम् ।
सेवतीपुष्पसाहस्रात् कुब्जकं पुष्पमुत्तमम् ॥”
(यथा, भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
“शतपत्री तरुणयुक्ता कर्णिका चारुकेशरा ।
महाकुमारी गन्धाढ्या लाक्षापुष्पातिमञ्जुला ॥”
अस्या गुणाः । शिशिरत्वम् । स्निग्धत्वम् । पित्तदाहज्वरसुखमालस्यविस्फोटिविनाशित्वम् । मधुरत्वञ्च । इति राजनिर्घण्टः ॥
तरुणीकटाक्षमालः, पुं, ( तरुणीनां कटाक्षाणां माला यत्र ।) तिलकवृक्षः । इति राजनिर्घण्टः ॥
तरुतूलिका, स्त्री, (तरुस्थिता तूलिका चित्रशलाका इव । यद्वा, तरौ वृक्षे तोलयतीति । तुल क्षेपे +ण्वुल् । टापि अत इत्वम् । पृषोदरादित्वात् साधुः । ) वातुलिः । इति हारावली । बादुड़ इति भाषा । तरुकूचिकापि पाठः ॥
तरुनखः, पुं, (तरौ तरोर्वा नख इव ।) कण्टकः । इति हारावली ॥
तरुभुक्, [ ज् ] पुं, ( तरुं भुनक्तीव । भुज+क्विप् । ) वन्दाकः । इति राजनिर्घण्टः ॥
तरुमृगः, पुं, ( तरौ तिष्ठन् मृग इव । शाकपार्थिववत् मध्यपदलोपी समासः । यद्वा, तरु प्रियो मृगः पशुः । ) वानरः । इति शब्दरत्नावली ॥
तरुरागं, क्ली, ( तरो रागो रक्तिमाभा यस्मात् ।) किशलयम् । नूतनपल्लवः । इति हारावली ॥
तरुराजः, पुं, (तरूणां राजा अत्युच्चत्वादस्य तथात्वम् । समासे टच् । ) तालवृक्षः । इति राजनिर्घण्टः ॥ ( सर्व्वपूज्यत्वात् स्वर्लोकभोग्यत्वाच्च पारिजातपुष्पवृक्षः । यथा, हरिवंशे ।१२४।५५।
“यद्देतदाहृतं स्वर्गात् तत् त्वदर्थं मया विभो ! ।
देवोपभोग्यमेतद्धि तरुराजसमुद्भवम् ॥”)
तरुरुहा, स्त्री, ( तरौ रोहतीति । रुह+कः । टाप् । ) वन्दाकः । इति राजनिर्घण्टः ॥
तरुरोहिणी, स्त्री, ( तरुषु रोहतीति । रुह+णिनिः+ङीप् ।) वन्दाकः । इति राजनिर्घण्टः ॥
तरुवल्ली, स्त्री, ( तरुषु वल्लीव तरुवल्लीव वा ।) जतुकालता । इति राजनिर्घण्टः ॥
तरुशायी, [ न् ] पुं, ( तरौ तरुकोटरे शाखायां वा शेते इति । शी+णिनिः ।) पक्षी । इति हारावली ॥
तरुसारः, पुं, ( तरोः सारः । ) कर्पूरः । इति हारावली ॥ ( यथा, सुश्रुते चिकित्सितस्थाने ३५ अध्याये । “तन्मेचापि सुवर्णरजतताम्रायोरीतिदन्तशृङ्गमणिसक्षारमयानि शणवाणीति ॥” कर्पूरस्थलेऽस्य विवृतिश्चास्या ॥)
तरुस्था, स्त्री, ( तरौ तिष्ठतीति । स्था+कः टाप् च । ) वन्दाकः । इति राजनिर्घण्टः ॥
तरूटः, पुं, ( तरोः कट इव । ) उत्पलकन्दः । अस्य गुणाः । गुरुत्वम् । विष्टम्भित्वम् । शीतलत्वञ्च । इति राजवल्लभः ॥ (यथा, चरके सूत्रस्थाने सप्तविंशेऽध्याये ।
“तरूटबिसशालूककौञ्चादनकशेरुकम् ।
शृङ्गाटकं कसेरुञ्च गुरुविष्टम्भि शीतलम् ॥”)
तर्क, क दीप्तौ । इति कविकल्पद्रुमः ॥ ( चुरां-परं-अकं-सेट् ।) क, तर्कयति । विलकोऽप्ययम् । ( अत्र तर्क ।) तर्कमतन्यगुणं सुधीः । इति दुर्गादासः ॥

तर्कः, पुं, (तर्क+भावे घञ् ।) आकाङ्क्षा । वितर्कः । व्यभिचारशङ्कानिवर्त्तकः । इति भाषापरिच्छेदः ॥ ( यथा, महाभारते । ३ । १६६ । १०७ ।
"शुष्कतर्कं परित्यज्य आश्रयस्व श्रुतिं स्मृतिम् ॥")
स च पञ्चविधः । यथा । आत्माश्रयः १ अन्योन्याश्रयः २ चक्रकः ३ अनवस्था ४ प्रमाणबाधितार्थकः ५ । इति जगदीशः ॥ एषां लक्षणानि तत्तच्छब्दे द्रष्टव्यानि ॥ कल्पः । हेतुशास्त्रम् । तत्तु मीमांसादि । इति मेदिनी । के, २५ । ( यथा, मनुः । १२ । १०६ ।
"आर्षं धर्म्मोपदेशञ्च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्म्मं वेद नेतरः ॥"
न्यायशास्त्रम् । यथा, नैषधे ।
"यत्कार्यं मधुवर्षिबिल्वपरास्तर्केषु यस्यो-
क्तयः ॥"
ज्ञानम् । यथा, महाभारते । १ । १६८ । १८ ।
"तं वै पञ्चाधिपं मन्ये आत्मानं तर्कचक्षुषा ॥"
अर्थवाद इति कर्म्मोपाध्यायः । यथा, अक्ताः शर्करा उपदधातीति विधिः श्रूयते । तत्राञ्जनसाधनं घृतं तैलं वा तन्मध्ये केनाक्ता इति संशये तेजो वै घृतमित्यर्थवादात् घृतेनाक्ता इति निर्णीयते । अतस्तर्कोऽर्थवादः ॥")

तर्ककः, पुं, (तर्केण आकाङ्क्षया कायति प्रकाशते इति । कै+कः ।) याचकः । इति हेमचन्द्रः ॥ (यथा, महाभारते । १२ । ४५ । ६ ।
"तथानुजीविनो भृत्यान् संश्रितानतिथीनपि ।
कामैः सन्तर्पयामास कृपणांस्तर्ककानपि ॥"
तर्कयतीति । तर्क+ण्वुल् ।) तर्ककारकश्च ॥

तर्कविद्या, स्त्री, ( तर्कोपदिष्टा विद्या तर्करूपा वा विद्या वा । ) न्यायविद्या । तत्पर्य्यायः । आन्वीक्षिकी २ । इत्यमरः । २।६।५ ॥ ( यथा, महाभारते । १३ । ३७ । १२ ।
"आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम् ॥")

तर्कारी, स्त्री, ( तर्कं अच्छतीति । ऋ+"कर्म्मण्यण् ।" ३ । २ । १ । इत्यण् । ङीप् च । ) जयन्तीवृक्षः । इत्यमरः । ४ । २ । ६५ ॥
(पर्य्यायोऽस्या यथा, वैद्यकरत्नमालायाम् ।
"वैजयन्ती च तर्कारी जयन्ती विजया जया ॥"
अस्या गुणा यथा,—
"तर्कारी वरणं स्वादु सतिक्तं कफवातजित् ॥"
इति वाभटे सूत्रस्थाने षष्ठेऽध्याये ॥
अस्याः व्यवहारो यथा,—
"तर्कारी चिरबिल्वाग्निमुखसुरसवत्सकाग्निमन्थैः ।
मन्थश्लेष्मफलैर्योयं ज्वरशुल्वस्य सेचनम् ॥"
इति चरके चिकित्सास्थाने सप्तविंशेऽध्याये ॥
इयं गणिकारिकापि वाच्या । तत्पर्य्याया यथा,
"अग्निमन्थो जयः स स्यात्श्रीपर्णी गणिकारिका ।
जया जयन्ती तर्कारी नादेयी वैजयन्तिका ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

तर्किया:, पुं, चक्रमर्द्दकः । इतिरत्नमाला ॥ तर्किलोऽपि पाठः ॥ ( चक्रमर्द्दशब्देऽस्य विवृतिर्ज्ञातव्या ॥)

तर्की, [ न् ] त्रि, (तर्कयितुं शीलमस्य यद्वा तर्कयतीति । तर्क+णिनिः । ) तर्कविशिष्टः । मीमांसकः । यथा,—
"त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्म्मपाठकः ।
त्रयश्चाश्रमिणः पूर्व्वे परिषत् स्याद्दशावरा ॥"
इति मनुः । १२ । १११ ॥

तर्कुः, स्त्री, ( कृत्+उः । निपातनात् साधुः । ) सूत्रनिर्म्माणयन्त्रम् । टेको इति भाषा ॥ तत्पर्य्यायः । कपालनालिका २ । इति त्रिकाण्डशेषः ॥ तर्कुटी ३ सूत्रला ४ । इति हारावली ॥ ( कुम्भकारस्य चक्राकारशिलाभाण्डम् । यथा, अनर्घराघवे । २ । ६ ।
"शुङ्गे सम्प्रति यावदभ्युदयते तत्तर्कुटक्षमाभृता रथ्यद्विम्बरजश्छटावलयितो देवस्त्रयीमीश्वरः ॥")

तर्कुटं, क्ली. ( तर्कयति सूत्रोत्पादकतया शोभते इति । तर्क दीप्तौ+बाहुलकात् उटन् । ) कर्त्तनम् । इति त्रिकाण्डशेषः ॥ काटनाकाटा इति भाषा ॥

तर्कुटी, स्त्री, ( तर्कुट+स्त्रियां गौरादित्वात् ङीष् ।) तर्कुः । इति हारावली । २१३ ।

तर्कुपिण्डः, पुं, ( तर्कुस्थितः पिण्डः । मध्यपदलोपिसमासः । ) तर्कुस्थितवर्त्तुपिण्डः । टेकोर वाँटुल इति भाषा ॥ तत्पर्य्यायः । वर्त्तिनी २ । इति जटाधरः ॥ तर्कुपीठी ३ वर्त्तुला ४ । इति हारावली । २१३ ॥

तर्कुपीठी, स्त्री, ( तर्कुस्थिता पीठी सम्पो न्यस्तपिण्डः । ) तर्कुपिण्डः । इति हारावली । २१३ ॥

तर्कुलासकः, पुं, ( लासयति शोभयतीति । लस कान्तौ+णिच्+ण्वुल् । तर्कुः सूत्रनिर्म्माणयन्त्रं तस्य लासकः । ) आक्षोलः । इति हारावली । २१३ ॥ खरसा इति भाषा ॥

तर्कुशाणः, पुं, ( तर्कोः शाणः । ) शाणकः । इति त्रिकाण्डशेषः ॥ टेकोर शाण इति भाषा ॥

तर्क्षुः, पुं, ( तरक्षुः पृषोदरादित्वात् साधुः । ) तरक्षुः । इति शब्दरत्नावली ॥

तर्क्ष्यः, पुं, यवक्षारः । इति रत्नमाला ॥

तर्ज्ज, भर्त्सने । इति कविकल्पद्रुमः ॥ ( भ्वां-परं-सकं-सेट् । ) तर्ज्जति । इति दुर्गादासः ॥

तर्ज्ज, क ङ भर्त्से । इति कविकल्पद्रुमः ॥ ( चुरां-आत्मं सकं-सेट् । ) क ङ, तर्ज्जयते । भर्त्सस्तर्ज्जनम् । तामतर्ज्जयदम्बरे । इति रघुप्रयोगस्तु तर्ज्जनं तर्ज्जः । तर्ज्जं करोतीति णौ साध्यः । इति दुर्गादासः ॥

तर्ज्जनं, क्ली, ( तर्ज्ज+भावे ल्युट् । ) भर्त्सनम् । यथा । अधीरायास्तर्ज्जनताडनादि । इति रसमञ्जरी ॥ ( यथाच कुमारे । ६ । ४५ ।
"भ्रूभेदिभिः सकम्पोष्ठैर्ललिताङ्गुलितर्ज्जनैः ।
यत्र कोपैः कृताः स्त्रीणामाप्रसादार्थिनः
प्रियाः ॥")

तर्ज्जनी, स्त्री, (तर्ज्जतेऽनयेति । तर्ज्ज भर्त्सने+करणे ल्युट् । ततः स्त्रियां ङीप् । ) अङ्गुष्ठसमीपाङ्गुलिः । तत्पर्य्यायः । प्रदेशिनी २ । इत्यमरः । २ । ६ । ८१ ॥ सा तु गर्भस्थस्य चतुर्भिर्म्मासैर्भवति । इति सुखबोधः ॥ (यथा, कथासरित्सागरे । १७ । ७८ ।
"तर्ज्जन्या श्वशुरं सं सा वधूः सोमप्रभा क्रुधा ।
विलोक्य भ्रामयामास प्रमाणमिव तर्ज्जनीम् ॥")

तर्ज्जिकः, पुं. ( तर्ज्जस्तर्ज्जनमस्त्यस्य । तर्ज्ज+ठन् ।) देशविशेषः । तत्पर्य्यायः । तायिकः २ । इति हेमचन्द्रः । ४ । २४ ॥

तर्णः, पुं, ( तर्णोति तृणादिकं भक्षयतीति । तृण् भक्षणे+अच् । ) वत्सः । इति हेमचन्द्रः । ४ । ३२६ ॥

तर्णकः, पुं, ( तर्ण एव । स्वार्थे कन् । ) सद्योजातवत्सः । इत्यमरः । २ । ९ । ६२ ॥ कोमले बाछुर इति भाषा ॥ (यथा, राजतरङ्गिण्याम् । ५ । ४३६ ।
"स्थानचौरो वरो यस्मीं वत्सद्वारो निपात्यते ।
व्यालिख्यमाना कण्डूञ्चितकर्णकैरिव हारकैः ॥"
बालकः । यथा, अनर्घराघवे । २ । २९ ।
"मुनिविनियोगजलप्ररूढकुशाङ्कुरानि
कर्णौ चि ।
गोकर्णतर्णकोऽयं तर्णोत्थपकण्ठकण्डूयु ॥" )

तर्णिः, पुं, ( तरणिः पृषोदरादित्वात्लोपः । ) सूर्य्यः । प्लवः । इति शब्दार्थकल्पतरुः ॥

तर्त्तरीकं, क्ली. (तीर्य्यतेऽनेनेति । तॄ+"फर्फरीकादयश्च ।" उणां । ४ । २० । इति ईकप्रत्ययेन निपातनात् साधुः ।) नौका । (तरतीति । कर्त्तरि ईकः ।) पारगे, त्रि । इति मेदिनी । कै,१९१ ॥

तर्द्द, हिंसे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) तर्द्दति । इति दुर्गादासः ॥

तर्द्दूः, स्त्री,(तरति प्लवते इति । तॄ+"चो दुक् च ।" उणां । १ । ९१ । इति ऊः दुगागमश्च ।) दारुहस्तकः । इत्यमरः । २ । ९ । ३४ । काठेर हाता इति भाषा ॥

तर्पणं, क्ली, ( तृप प्रीणने+भावे ल्युट् ।) तृप्तिः । प्रीणनम् । इत्यमरः । २ । ९ । ५६ ॥ ( यथा, कथासरित्सागरे । २६ । ७३६ ।
"तत्राभूय तरोर्मूले वेतालं शुककेवरे ।
पूजयित्वाकरोत्तस्य नृमांसबलितर्पणम् ॥" )
यज्ञकाष्ठम् । इति हेमचन्द्रः ॥ (तृप्यन्ति पितरो येन । तृप्+करणे ल्युट् । ) देवर्षिपितृमनुष्याणां जलाञ्जलिदानेन तृप्तिसम्पादनम् । यथा,
"एवं स्नात्वा पितॄन् देवान् मनुष्यांस्तर्पयेन्नरः ।
नाभिमात्रे जले स्थित्वा चिन्तयेदूर्द्ध्वमानसः ॥
आगच्छन्तु मे पितर इमं गृह्णन्त्वपोऽञ्जलिम् ।
त्रीन् त्रीन् जलाञ्जलीन्दद्यादाकाशे दक्षिणे तथा ॥
वसित्वा वसनं शुष्कं स्थले चाऽस्तीर्णबर्हिषि ।
विधिज्ञास्तर्पणं कुर्य्युर्न पात्रे तु कदाचन ॥
यदपां क्रूरमांसञ्च यदमेध्यञ्च किञ्चन ।
अशान्तं मलिनं यच्च तत् सर्व्वमपगच्छतु ॥
गृहीत्वानेन मन्त्रेण तोयं सव्येन पाणिना ।
प्रक्षिपेद्दिशि नैरृत्यां रक्षोभक्षतयेऽक्षतम् ॥
आगाधिकञ्च यद्भुक्तं मामादृयच्च प्रतिग्रहम् ।

दुष्कृतं यच्च मे किञ्चिद्वाङ्मनःकायकर्म्मभिः ॥
पुनातु मे तदिन्द्रस्तु वरुणः सबृहस्पतिः ।
सविता च भगश्चैव मुनयः सनकादयः ॥
आब्रह्मस्तम्बपर्य्यन्तं जगत् तृप्यत्विति ब्रुवन् ।
क्षिपेत्पयोऽञ्जलीनेवं कुर्व्वन् सङ्क्षेपतर्पणम् ॥"
इति गारुडे २१५ अध्यायः ॥
तर्पणविशेषस्तु गारुडे २१६ अध्याये तथा वह्निपुराणे नित्याह्निकस्नानविधिनामाध्याये च द्रष्टव्यः ॥ * ॥ जीवत्पितृकस्य तर्पणनिषेधो यथा,—
"दर्शश्राद्धं गयाश्राद्धं तिलैस्तर्पणमेव च ।
न जीवत्पितृको भूप ! कुर्य्यात् तत्पापमाप्नुयात् ॥"
इति कालिकापुराणे ८६ अध्यायः ॥
महायज्ञविशेषः । तत्तु पितृयज्ञः । पितॄणां कव्यजलादीनाञ्च विधिना जलाञ्जलिदानेन तृप्तिसम्पादनम् । इत्यमरटीकायां भरतः ॥ "तत् द्विविधं प्रधानमङ्गञ्च । तत्राद्यं यथा,—
'तर्पणञ्च शुचिः कुर्य्यात् प्रत्यहं स्नातको द्विजः ।
देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमम् ॥'
इति शातातपः ॥
विधवामधिकृत्य काशीखण्डे ।
'तर्पणं प्रत्यहं कार्य्यं भर्त्तुः कुशतिलोदकैः ।
तत्पितुस्तत्पितुश्चापि नामगोत्रादिपूर्व्वकम् ॥'
द्वितीयं यथा, ब्रह्मपुराणे ।
'नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते ।
तर्पणन्तु भवेत्तस्य अङ्गत्वेन व्यवस्थितम् ॥'
तर्पणाकरणे दोषः । यथा, योगियाज्ञवल्क्यः ।
'नास्तिक्यभावाद्यश्चापि न तर्पयति वै सुतः ।
पिबन्ति देहरुधिरं पितरो वै जलार्थिनः ॥"
तस्य निषिद्धस्थानादि यथा । "नैष्कारणिते स्थाने पितॄंस्तर्पयेत् ।' इति शङ्खलिखितौ ॥
'यत्र सर्व्वाय चोत्सृष्टं यच्चाभोज्यनिपानजम् ।
तद्वर्ज्यं सलिलं तात ! सदैव पितृकर्म्मणि ॥'
इति मार्कण्डेयपुराणम् ॥ * ॥
तस्य विधानं यथा । स्नातश्चार्द्रवासा देवपितृतर्पणमम्भःस्थ एव कुर्य्यात् परिवर्त्तितवासाश्चेत् तीरमुत्तीर्य्येति । इति विष्णुः ॥ तीर्थे विशेषो यथा, मत्स्यपुराणे ।
'तिलोदकाञ्जलिर्देयो जलस्थैस्तीर्थवासिभिः ॥'
तीर्थे स्थलस्थश्चेत् तर्पणं करोति तदा जलैकचरणः आचम्य कुर्य्यात् तस्य जले च तर्पणमविरुद्धम् । स्थले तर्पणं दर्भेषु कार्य्यम् । यथा,—
'प्रागग्रेषु सुरांस्तर्प्येत् मनुष्यांश्चैव मध्यतः ।
पितॄंश्च दक्षिणाग्रेषु दद्यादिति जलाञ्जलीन् ॥'
इति आग्नेयपुराणम् ॥
अशुचिदेशे तु ।
'यत्राशुचिस्थलं वा स्यादुदके देवतापितॄन् ।
तर्पयेत्तु यथाकाममप्सु सर्व्वं प्रतिष्ठितम् ॥'
इति विष्णुः ॥
'प्रादेशमात्रं उद्धृत्य सलिलं प्राङ्मुखः सुरान् ।
उदङ्मुखांस्तर्प्येत पितॄन् दक्षिणतस्तथा ॥'
इति दक्षः ॥

उद्धृतोदके तु ।
'पात्राद्वा जलमादाय शुभौ पात्रान्तरे क्षिपेत् ।
जलपूर्णेऽथवा गर्त्ते न स्थले तु विचक्षणैः ॥'
इति हारीतः ॥
'यद्युद्धृतैः प्रसिञ्चेत् तिलान् संमिश्रयेज्जले ।
अतोऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः ॥'
इति योगियाज्ञवल्क्यः ॥
"अङ्गुष्ठानामिकाभ्यान्तु दक्षिणस्येतरात् करात् ।
तिलान् गृहीत्वा पात्रस्थान् ध्यायन् सन्तर्पयेत् पितॄन् ॥'
इति नारदः ॥ * ॥
देवतर्पणं यथा,—
'ब्रह्माणं तर्पयेत् पूर्व्वं विष्णुं रुद्रं प्रजापतिम् ।
देवा यक्षास्तथा नागा गन्धर्व्वाप्सरसोऽसुराः ॥
क्रूराः सर्पाः सुपर्णाश्च तरवो जम्भकाः खगाः ।
विद्याधरा जलाधारास्तथैवाकाशगामिनः ॥
निराहाराश्च ये जीवाः पापे धर्म्मे रताश्च ये ।
तेषामाप्यायनायैतद्दीयते सलिलं मया ॥'
इदं उपवीतिना प्राङ्मुखेन देवतीर्थेन कार्य्यम् ॥
मनुष्यतर्पणं यथा,—
'सनकश्च सनन्दश्च तृतीयश्च सनातनः ।
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा ॥
सर्व्वे ते तृप्तिमायान्तु मद्दत्तेनाम्बुना सदा ॥'
इदं निवीतिना मनुष्यतीर्थेन सामगेन प्राङ्मुखेन कार्य्यम् । अन्यवेदिना उदङ्मुखेन कार्य्यम् ॥ * ॥ तत ऋषितर्पणं प्राङ्मुखेन उपवीतिना दैवतीर्थेन कार्य्यम् । ततो दिव्यपितृतर्पणं दक्षिणामुखेन प्राचीनावीतिना सतिलजलेन पितृतीर्थेन कार्य्यम् । ततः पितृतर्पणम् ॥ * ॥ भीष्माष्टम्यां भीष्मतर्पणम् । तस्य मन्त्रो यथा,—
'वैयाघ्रपद्यगोत्राय साङ्कृतिप्रवराय च ।
अपुत्राय ददाम्येतत् सलिलं भीष्मवर्म्मणे ॥'
प्रार्थनमन्त्रो यथा,—
'भीष्मः शान्तनवो वीरः सत्यवादी जितेन्द्रियः ।
आभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियाम् ॥'
प्रेतचतुर्द्दश्यां यमतर्पणं यथा,—
'यमाय धर्म्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्व्वभूतक्षयाय च ॥
औडुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥'
प्रत्येकनामभिस्त्रींस्त्रीनञ्जलीन् दद्यात् ॥ * ॥
तिलतर्पणनिषेधो यथा,—
'रविशुक्रदिने चैव द्वादश्यां श्राद्धवासरे ।
सप्तम्यां जन्मदिवसे न कुर्य्यात् तिलतर्पणम् ॥'
इति स्मृतिः ॥
'संक्रान्त्यां निशि सप्तम्यां रविशुक्रदिने तथा ।
श्राद्धे जन्मदिने चैव न कुर्य्यात्तिलतर्पणम् ॥'
इति मत्स्यपुराणम् ॥
तस्य प्रतिप्रसवो यथा,—
'अयने विषुवे चैव संक्रान्त्यां ग्रहणेषु च ।
उमाकर्म्मणि चोत्सर्गे युगादौ मृतवासरे ॥

कृष्णशुक्लादिवारेऽपि न दोषस्तिलतर्पणे ।
तीर्थे तिथिविशेषे च कार्य्यं प्रेते च सर्व्वदा ॥'
इति स्मृतिः ॥
'तीर्थे तिथिविशेषे च गङ्गायां प्रेतपक्षके ।
निषिद्धेऽपि दिने कुर्य्यात् तर्पणं तिलमिश्रितम् ॥'
इति मरीचिवचनम् ॥ * ॥
तिलाभावे प्रतिनिधिर्यथा ।
'तिलानामप्यभावे तु सुवर्णरजतान्वितम् ।
तदभावेऽपि सिञ्चेत्तु दर्भैर्मन्त्रेण वाप्यथ ॥'
इति याज्ञवल्क्यः ॥ * ॥
अशक्तौ । आब्रह्मस्तम्बपर्य्यन्तं जगत्तृप्यतु । इत्यनेन त्रींस्तर्पयेत् ।" इत्याह्निकतत्त्वम् ॥
काशीखण्डमते तु ।
"आब्रह्मस्तम्बपर्य्यन्तं देवर्षिपितृमानवाः ।
तृप्यन्तु सर्व्वे पितरो मातृमातामहादयः ॥
अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् ।
आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम् ॥" * ॥
जन्माष्टम्यां तर्पणस्य फलं यथा,—
"तस्यां तिथौ वारिमात्रं पितॄणां यः प्रयच्छति ।
गयाश्राद्धं कृतं तेन शताब्दं नात्र संशयः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डम् ॥
तर्पणी, स्त्री, (तृप्यतेऽनयेति । तृप + करणे ल्युट् । स्त्रियां ङीप् ।) गुरुकम्बलवृक्षः । स च सेश्वरवृक्षः । इति शब्दमाला ॥ (सर्व्वजनतृप्तिप्रदायित्वात् गङ्गा । यथा, काशीखण्डे ।२९।७२।
"तर्पणी तीर्थतीर्था च त्रिपथा त्रिदशेश्वरी ॥"
प्रीतिप्रदे, त्रि । यथा, सुश्रुते सूत्रस्थाने ४६ अध्याये ।
"क्षुत्तृष्णाश्रमग्लानिहरी पेया वातानुलोमनी ।
विलेपी तर्पणी हृद्या ग्राहिणी बलवर्द्धिनी ॥")
तर्पणेच्छुः, पुं, (तर्पणमिच्छतीति । इष + उः निपातनात् साधुः ।) भीष्मः । इति शब्दरत्नावली ॥ तर्पणाकाङ्क्षिणि, त्रि ॥
तर्पिणी, स्त्री, (तर्पयति प्रीणयतीति । तृप् + णिच् + णिनिः । ततो ङीप् ।) पद्मचारिणी । इति शब्दचन्द्रिका ॥
त(र्ब्ब)र्व, गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) रेफोपधः । तर्व्वति । इति दुर्गादासः ॥
तर्व्वटः, पुं, (तर्व्वति दूरं गच्छतीति । तर्व्व + बाहुलकात् अटन् ।) वत्सरः । इति शब्दरत्नावली ॥ चक्रमर्द्दः । इति राजनिर्घण्टः ॥
तर्म्म, [न्] क्ली, (तरतीति । तॄ + "सर्व्वधातुभ्यो मनिन् ।" उणां ४ । १४४ । इति मनिन् ।) यूपाग्रम् । इत्यमरः । २ । ७ । १६ ॥
तर्षः, पुं, (तृष पिपासायाम् + भावे घञ् ।) अभिलाषः । (यथा, महाभारते । १२ । २०४ । ६ ।
"तर्षच्छेदो न भवति पुरुषस्येह कल्मषात् ।
निवर्त्तते तदा तर्षः पापमन्तगतं यदा ॥")
तृष्णा । इत्यमरः । २ । ६ । ५५ ॥ (यथा, राजतरङ्गिण्याम् । ३ । ४८० ।
"तपस्यार्णवमानेन तर्षोत्कर्षमिवोद्वहन् ।

